# अथ संकल्पकल्पनाया विषयानुक्रमणिका ।

इति विषयानुक्रमणिका समाप्ता।

॥ श्रीगणेशाय नमः ॥ श्रीशं गणेश्वरं नत्वा पूर्वग्रन्थान् विलोक्य च ॥ परिशोध्य सदाचारान् मयूरेश्वरसूनुना ॥ १ ॥ ज्योतिर्वित्कुलजातेन पल्लीदुर्गनिवासिना ॥ क्रियते रामचन्द्रेण स्वल्पा संकल्पकल्पना ॥ २॥ सुधीनां सुखबोधाय ग्रन्थाः सन्ति सहस्रशः ॥ तथापि रचिता ह्येषा बालानां सुखसिद्धये ॥३॥ अथ चैत्रमासः। चैत्रशुक्लप्रतिपदि प्रातरभ्यंगस्नानं कृत्वा वस्त्रपरिधानादिनित्यकर्म निर्वर्त्यांगणे शुभदेशे गोमयेनोपलिप्य रंगवल्ल्याद्यलंकृतदेशे धान्यराश्युपरि जलपूर्णपल्लवोपेत दूर्वायुतसुधालिप्तसफलकलशं निधाय तत्समीपे अत्युच्चं वैणवं दण्डम् अग्रे वस्त्रभाण्डसहितं रोपयित्वा पूजयेत् । देश० । मम समस्तमङ्गलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वत्सरारम्भनिमित्तं वत्सराधिपपूजनमहं करिष्ये ।ॐ भूर्भुवः स्वः वत्सराधिपतये नमः, वत्सराधिपतिम् आवाहयामि। इति मन्त्रेण षोडशोपचारैः संपूज्य, अनेन पूजनेन वत्सराधिपतिः प्रीयताम् । ततः पञ्चाङ्गश्रवणं कृत्वा पारिभद्रस्य पत्राणि भक्षयेत् । तद्विधिः । मरीचं लवणं हिंगु ह्यजमोदाः सशर्कराः । तिंतिडीमेलनं कृत्वा

भक्षयेद्ब्राह्मणैः सह ॥ चैत्रशुक्लतृतीयामारभ्यमासपर्यन्तं गौरीपूजा । देश० । ममाखण्डितसौभाग्यावाप्तिपूर्वकपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीगौरीप्रीत्यर्थं मासपर्यन्तं गौर्या आंदोलनाख्यं कर्म करिष्ये, तदङ्गत्वेन पूजनमहं करिष्ये । श्रीगौर्यै सांगायै सपरिवारायै सायुधायै सशक्तिकायै नमः इति संपूज्य, अनेन पूजनेन गौरी प्रीयताम् ॥ वैशाखस्नानम् ॥ चैत्रशुक्लैकादश्यां पौर्णमास्यां वा वैशाखस्नानारंभः । देश० । मम वाङ्मनःकायजाशेषपापक्षयद्वारा श्रीमधुसूदनदेवताप्रीत्यर्थम् असुकतीर्थे अथवा विष्णुतीर्थे वैशाखस्नानमहं करिष्ये । तत्र मन्त्राः । वैशाखं सकलं मासं मेषसंक्रमणे रवौ । प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः ॥ मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥ माधवे मेषगे भानौ मुरारे मधुसूदन । प्रातः स्नानेन मे नाथ फलदो भव पापहन् ॥इति स्नायात् ॥ इति चैत्रमासः॥अथ वैशाखमासः ॥ अक्षयतृतीयायां देवतोद्देशेन पित्रुद्देशेन वा उदकुम्भदानमुक्तम् । देश० । असुकगोत्रोत्पन्नस्य अमुकशर्मणो मम उद

कुम्भदानकल्पोक्तफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थमक्षयतृतीयायुगादिमहापर्वनिमित्तं ब्राह्मणाय सोपस्करोदकुम्भदानमहं करिष्ये । तत्रादावुदकुम्भपूजनं ब्राह्मणपूजनं च । उदकुम्भदेवताभ्यो नमः इति कुम्भं संपूज्य ब्राह्मणं च सं०।स्वस्त्यस्त्वित्यादि । एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्सकला मम संतु मनोरथाः ॥ गन्धोदकयवैर्मिश्रं सान्नं कुम्भं फलान्वितम् । विष्णवे संप्रदास्यामि ह्यक्षय्यमुपतिष्ठतु ॥ इममुदकुम्भं सोपस्करम् अमुकशर्मणे ब्राह्मणाय कृतसङ्कल्पसिद्धि कामस्तुभ्यमहं संप्रददे न मम । कृतस्य सोपस्करोदकुम्भदानस्य प्रतिष्ठाफलसंसिद्ध्यर्थमिमां दक्षिणां तुभ्यमहं संप्रददे । अनेन उदकुम्भदानेन श्रीपरमेश्वरः प्रीयताम् । मम उदकुम्भदानकल्पोक्त फलावाप्तिद्वारा पितॄणामक्षयतृप्त्यर्थमक्षयतृतीयायुगादिमहापर्वनिमित्तं ब्राह्मणाय सोपस्करो० । तत्रादावुदकुम्भपू० । स्वस्त्यस्त्वित्यादि । एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदाना तृप्यन्तु पितरोथ पितामहाः ॥ गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं फलान्वितम् । पितृभ्यः संप्रदास्यामि

ह्यक्षय्यमुपतिष्ठतु । इमम् उदकुम्भं० संप्रददे न मम । कृतस्य सोपस्करोदकुम्भदानस्य प्र० । अनेनोदकुम्भदानेन श्रीपरमेश्वरः प्रीयताम् । युगादिश्राद्धं मन्वादिश्राद्धं च दर्शवत् षड्दैवतोद्देशेन पिण्डरहितं कुर्यात् । तदशक्तौ तर्पणं कार्यम् । तत्र संकल्पः । द्विराचम्य कुशपाणिः प्राणानायम्य देशका० । युगादिश्राद्धस्थानापन्नं पितृतर्पणं क० । अपसव्यम् । दर्शवत् षड्दैवतोद्देशेन कुर्यात् । अस्मत्पितरममुकशर्माणममुकगोत्रं सपत्नीकं वसुरूपं स्वधा नमस्तर्पयामि । एवं पितामहादि० । सव्यम् । अनेन पितृतर्पणेन पितृस्वरूपी जनार्दनवासुदेवः प्रीयताम् ॥ छत्रदानम् ॥ मम वाङ्मनःकायजत्रिविधपापक्षयद्वारा मधुसूदनदेवताप्रीत्यर्थं वैशाखमासनिमित्तं ब्राह्मणाय छत्रदानम् । तदंगत्वेन ब्राह्मणपूजनं क० । ब्राह्मणं पूजयित्वा, स्वस्त्यास्त्वित्यादि । इहामुत्रातपत्राणं कुरु केशव मे प्रभो । छत्रं त्वत्प्रीतये दत्तं ममास्तु तत्सदा शुभम् ॥ इदं छत्रममुकशर्मणे ब्राह्मणाय सङ्कल्पितकामनासिद्धिकामस्तुभ्यमहं संप्रददे न मम । प्रतिगृह्यताम् ॥ सांगतासिद्ध्यर्थमिमां दक्षिणां तुभ्य० ।

तेन श्रीमधुसूदनः प्रीयताम् ॥ व्यजनम् ॥ मम वाङ्मनःकायजत्रिविधपापक्षयद्वारा मधु० व्यजन
दानमहं करिष्ये । तदंगतया ब्राह्मणपूजनं क० । स्वस्त्य० । व्यजनं वायुदैवत्यं ग्रीष्मकाले सुखप्र
दम् । अस्य प्रदानात्सकला मम संतु मनोरथाः ॥ इदं व्यजनममुकशर्मणे ब्राह्मणाय वाङ्मनः
कायजत्रिविधपापक्षयकामस्तुभ्यम० । कृतस्य व्यजनदानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० । अनेन
व्यजनदानेन मधुसूदनः प्रीयताम्॥तिलपात्राणि ॥१२॥ देश०। मम वाङ्मनःकायजजन्मजन्मान्तरा
र्जिताशेषपापक्षयद्वारा मधुसूदनधर्मराजदेवताप्रीत्यर्थं वैशाखपौर्णमासीमहापर्वनिमित्तं द्वादशब्राह्म
णेभ्यः सुवर्णतिलयुक्तद्वादशतिलपात्रदानानि०। तदङ्गत्वेन ब्राह्मणपूजनं० । स्वस्त्य० । तिला वै सोम
दैवत्याः सुरैः सृष्टास्तु गोसवे। स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः॥इमानि सुवर्णतिलयुक्त
द्वादशतिलपात्राणि नानानामगोत्रेभ्यो द्वादशसंख्याकेभ्यो ब्राह्मणेभ्यो मधुसूदनधर्मराजदेवताप्रीति
कामो युष्मभ्यमहं संप्रददे न मम। कृतानां द्वादशतिलपात्रदानानां प्रतिष्ठाफलसिद्ध्यर्थमिमां दक्षिणां

युष्मभ्यमहं सं० । तेन श्रीमधुसूदनधर्मराजदेवता प्रीयताम् ॥ कदली ॥ मम सकलमनोरथावाप्ति द्वारा श्रीमधुसूदनदेवताप्रीत्यर्थं वैशाखमासनिमित्तं ब्राह्मणाय कदलीफलदानम० । तदङ्गत्वेन ब्रा० । स्वस्त्य० । कदलं सर्वदोषघ्नं हेमवर्णांबरावृतम् । तस्मादस्य प्रदानेन मम सन्तु मनोरथाः ॥ इमानि कदलीफलानि अमुकशर्मणे ब्राह्मणाय मधुसूदनदेवताप्रीतिकामस्तुभ्य० । प्रतिगृह्यताम् । साङ्गतासिद्ध्यर्थमिमां दक्षिणां तुभ्य० । कृतेन कदलीफलदानेन श्रीमधुसूदनदेवता प्रीयताम् । उपानहौ ॥ मम वाङ्मनःकायजाशेषपापक्षयपूर्वककंटकादिपीडानिवृत्तिद्वारा श्रीमधुसूदनप्रीत्यर्थं वैशाखमासनिमित्तं ब्राह्मणाय उपानद्दानं क० । तदङ्गब्राह्मणपू० । स्वस्त्य० । उपानहौ प्रदास्यामि कंटकादिनिवारणे ॥ सर्वस्थानेषु सुखदे अतः शांतिं प्रयच्छतः ॥ इमे उपानहौ अमुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । उपानत्प्रदानस्य साङ्गतासिद्ध्यर्थमिमां० । तेन श्रीमधुसूदनः प्रीयताम् ॥ चंदनम् ॥ मम वाङ्मनःकायजत्रिविधपापक्षयपूर्वकमनाधि सर्वदानन्दप्राप्तिद्वारा मधुसू-

दनप्रीत्यर्थं वैशाखमासनिमित्तं ब्राह्मणाय चन्दनदानं क० । तदंगत्वेन ब्राह्मणपू० । स्वस्त्य० ।
चन्दनावास मन्दार सखे वृन्दारकार्चित । चन्दन त्वत्प्रदानान्मे सदानन्दप्रदो भव ॥ इदं चन्दन
ममुकशर्मणे ब्राह्मणाय कृतसङ्कल्पसिद्धिकामस्तु० । साङ्गतासिद्धयर्थमिमां० । तेन श्रीमधुसूदनः
प्रीयताम् ॥ वसन्तपूजा ॥ देशकाल० प्राप्त्यर्थं वसन्तमाधवमासनिमित्तं मधुसूदनदेवताप्रीत्यर्थं
नानानामगोत्राणां ब्राह्मणानां पाद्यादिभिः पूजनमहं० । तत्रादौ निर्विघ्नतासिद्धयर्थं महागणपति
स्मरणं क० ॥ वैशाखशुक्लद्वादश्यां पौर्णमास्यां वा वैशाखस्नानोद्यापनं कार्यम् ॥ यथोक्तोद्यापना
न्तौ ब्राह्मणाय दक्षिणां दत्त्वा समाप्तिं वाचयेत् । वैशाखस्नानसमाप्तिरस्त्विति भवन्तो ब्रुवन्तु ।
ब्राह्मणाः । वैशाखस्नानसमाप्तिरस्तु॥ इति वैशाखमासः ॥ अथ ज्येष्ठमासः ॥ दशहरास्नानसङ्क
ल्पः । देशकालौ० ममैतज्जन्मजन्मांतरसमुद्भूतदशविधपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं दशह
रामहापर्वनिमित्तं गंगाभागीरथ्याः सकाशादानीतोदकेन गंगाभागीरथीस्नानमहं करिष्ये । इति

संकल्प्य स्नात्वा गंगापूजां कुर्यात् । देश० । दशहरामहापर्वनिमित्तं गंगापूजां क० । तत्र मन्त्रः । नमो भगवत्यै दशपापहरायै गंगायै नारायण्यै रेवत्यै दक्षायै शिवायै अमृतायै विश्वरूपिण्यै नंदिन्यै ते नमो नमः । इति मन्त्रेण आवाहनादिभिः संपूज्य० । होमपूजास्तोत्रविस्तारस्त्वन्यत्र ज्ञेयः ॥ ज्येष्ठशुक्लद्वादश्यां सहिरण्यसशर्करोदकुम्भदानम् ॥ मम निर्जलोपोषितैकादशीव्रतांगत्वेन ब्राह्मणाय सहिरण्यसशर्करोदकुम्भदानं क० । तदङ्गब्राह्मणपू० । स्वस्त्य० । देवदेव हृषीकेश संसारार्णवतारक । उदकुम्भप्रदानेन यास्यामि परमां गतिम् ॥ इमं शर्करायुतं सहिरण्यमुदकुम्भमघ्नुकर्मणे ब्राह्मणाय तुभ्यं० । सांगतासिद्ध्यर्थमिमां० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ इति ज्येष्ठमासः॥

अथ आषाढमासः ॥ आषाढशुक्लैकादश्यां रात्रौ विष्णुशयनोत्सवः । ममोपात्तदुरितक्षयद्वारा श्रीमहाविष्णुप्रीत्यर्थं शयनोत्सवाख्यं कर्म क० । तदंगत्वेन पुरुषसूक्तेन विधिना षोडशोपचारैः महाविष्णुपूजां करिष्ये । इति संकल्प्य महापूजां जातीकुसुममालाभिः कुर्यात् । पूजामन्त्रः । सुप्ते

त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे च विबुद्धयेत प्रसन्नो मे भवाच्युत ॥ अनेन मन्त्रेण पुरुषसूक्तर्ग्भिश्च षोडशोपचारैः पूजयेत् । अनेन पूजनेन महाविष्णुः प्रीयताम् । ततः विष्णोरग्रे प्रभाषेत । देश० । शयनीमारभ्य बोधिनीपर्यंतं प्रत्यहं ताम्रपात्रदानरूपव्रतं विष्णुप्रीतिकामोहमा चरिष्ये । एवंरीत्या अमुकदानव्रतममुकवर्जनव्रतममुकभक्षणव्रतममुकदेवताप्रीतिकामोहमाच रिष्ये । चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि । श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके द्विदलं तथा ॥ एतानि व्रतानि नित्यानि व्रतांतरचिकीर्षायां श्रावणे वर्जयेत् शाकमिति श्लोकस्थाने यथायथमूहः कार्यः । हविष्यान्नं भक्षयिष्ये देवाहं प्रीतये तव । इति हविष्यान्नभक्षणे । शाकव्रते व्रतांतरे च समुच्चयेन कर्त्तव्ये आदौ श्रावणे वर्जयेच्छाकमिति श्लोकं पठित्वा व्रतान्तरमंत्रं वदेत् । एवं गुडवर्जनादिव्रतेषु । वर्जयिष्ये गुडं देव मधुरस्वरसिद्धये । वर्जयिष्ये तैलमहं सुन्दरांगत्वसिद्धये ॥ मौनव्रती भविष्यामि स्वाज्ञापालनसिद्धये । एकान्तरोपवासश्च प्राप्तुं

ब्रह्मपदं परम् ॥ निषिद्धमात्रपदार्थवर्जनेच्छायाम् । वृन्ताकादिनिषिद्धानि हरे सर्वाणि वर्जये । इत्यादिरीत्योहः कार्यः ॥ अथ चातुर्मास्यव्रतानि ॥ तांबूलत्यागाद्भोगो मधुरकंठश्च । घृतत्यागी स्निग्धतनुः । शाकत्यागी पक्वान्नभुक् । पादाभ्यंगत्यागाद्वपुःसौगन्ध्यम् । दधिदुग्धतक्रत्यागाद्विष्णुलोकः । स्थालीपाचितान्नत्यागाद्दीर्घसन्ततिः । भूमौ दर्भशायी विष्णुदासः । भूमिभोजनान्नृपत्वम् । मधुमांसत्यागान्मुनिः । एकान्तरोपवासात् ब्रह्मलोकः । नखकेशधारणात् दिनेदिने गंगास्नानम् । मौनात् अस्खलिताज्ञा । विष्णुवन्दनात् गोदानफलम् । विष्णुपादस्पर्शात् कृतकृत्यता हरेरालये संमार्जनादिना नृपत्वम् । शतप्रदक्षिणाकरणाद्विष्णुलोकः । एकभक्ताशनादग्निहोत्रफलम् । अयाचितेन वापीकूपोत्सर्गादिपूर्त्तफलम् । षष्ठाहःकालभोजनात् चिरं स्वर्गः । पर्णेषु भोजनात् कुरुक्षेत्रवासफलम् । शिलाभोजनात्प्रयागस्नानफलम् । एवं मासचतुष्टयसाध्यानां व्रतानां संकल्प्य मन्त्रान्पठेत् । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत । इदं व्रतं मया देव गृहीतं पुरतस्तव ॥

निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव । गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ॥ तदा भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन । गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रिये ह्यहम् ॥ तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥ अनेकव्रतानां युगपत्करणे तु एवं रीत्या मन्त्रान्पठेत् । इमान्करिष्ये नियमान्निर्विघ्नान् कुरु मेऽच्युत ॥ व्रतानीमानि मे देव गृहीतानि पुरस्तव ॥ निर्विघ्नानि च सिद्धिं हि यांतु ते केशव प्रभो । गृहीतेषु व्रतेष्वेषु पञ्चत्वं यदि मे भवेत् ॥ तदा भवंतु पूर्णानि त्वत्प्रसादाज्जनार्दन । गृहीतेषु व्रतेष्वेषु यद्यपूर्णे म्रिये ह्यहम् ॥ तन्मे भवन्तु पूर्णानि त्वत्प्रसादाज्जनार्दन ॥ श्रावणमासव्रतविशेष संकल्प इहैव कार्यः । देश० । अहं शाकं वर्जयिष्ये श्रावणे मासि माधव॥ घृतपूरितरीतिपात्रदानम् ॥ ममाशेषपापक्षयपूर्वकघृतपूरितरीतिपात्रदानकल्पोक्तफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चातुर्मास्यप्रयुक्तं ब्राह्मणाय घृतपूरितरीतिपात्रदानं० ॥ तदङ्गत्वेन ब्राह्मण० । स्वस्त्य० । रीतिपात्रं पुष्टिकरं देवप्रियकरं शिवम् । सर्वरक्षाकरं नित्यमतः शांतिं प्रयच्छतु ॥ इदं घृतपूरितरीतिपात्र

ममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । कृतस्य घृतपूरितरीतिपात्रदानस्य प्रतिष्ठाफलसिद्ध्यर्थंमि० । अनेन घृतपूरितरीतिपात्रदानेन श्रीपरमे० ॥ ताम्रपात्रम् ॥ ममाभीष्टसिद्धिद्वारा श्रीविष्णुप्रसादसिद्ध्यर्थं चातुर्मास्यनिमित्तं ब्राह्मणाय ताम्रपात्रदानम० । तदङ्गत्वेन ब्राह्मणपू० । ताम्रं पुष्टिकरं सर्वदेवप्रियकरं शिवम् । सर्वरक्षाकरं नित्यमतः शान्तिं प्रयच्छतु ॥ इदं ताम्रपात्रममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । कृतस्य ताम्रपात्रदानस्य प्रतिष्ठाफलसिद्ध्यर्थंमि० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ तिलपात्रम् ॥ मम समस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं चातुर्मास्यप्रयुक्तं ब्राह्मणाय तिलपात्रदानं करिष्ये । तदंगतया ब्राह्मणपू० । स्वस्त्य० । महर्षेर्गोत्रसंभूताः काश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ इदं तिलपात्रममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । प्रतिगृह्यताम् । दानसांगतासिद्ध्यर्थंमि० । तेन श्रीपरमेश्वरः प्री० ॥ शर्करादानम् ॥ देश० चातुर्मास्यप्रयुक्तं श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणाय शर्कराप्रदानं

करिष्ये । तदंगत्वा० । स्वस्त्य० । अमृतस्य कणाः प्र क्ता इक्षुसारजशर्करा । तस्मादस्याः प्रदानेन भानुर्दिशतु वांछितम् ॥ इमां शर्करामुकशर्मणे ब्राह्मणाय संकल्पितकामनासिद्धिकामस्तु ० सांगतासिद्ध्यर्थमि० । श्रीपरमेश्वरः० ॥ दीपदानम् ॥ शुभपुण्यतिथौ चातुर्मास्यनिमित्तं श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणाय दीपदानमहं क० । तदंगत्वेन दीपपूजनं ब्राह्मणपूजनं च० । दीपदेवताभ्यो नमः । चन्दनमित्यादिमन्त्रैः पुष्पान्तं संपूज्य । महाविष्णुस्वरूपिणे ब्राह्मणाय समस्तोपचारार्थं गंधाक्षतपुष्पतुलसीपत्रं समर्पयामि । स्वस्त्य० ज्योतिः शुक्रं च तेजश्च देवानां सततं प्रियः । भास्करः सर्वभूतानां दीपोऽयं प्रतिगृह्यताम् ॥ अमुं दीपममुकशर्मणे ब्राह्मणाय परमेश्वरप्रीतिकामस्तु० । दानसांगतासिद्ध्यर्थमि० । अनेन दीपदानेन श्रीपरमेश्वरः प्री० ॥ वस्त्रदानम् ॥ ममाक्षयान्नधनप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चातुर्मास्यनिमित्तं ब्राह्मणाय वस्त्रदानम० । तदंगत्वेन ब्राह्मणपू० । स्वस्त्य० । शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः शांतिं प्रयच्छ मे ॥ इदं वस्त्रं

बार्हस्पत्यममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । वस्त्रदानसांगतासिद्ध्यर्थमिमां० तेन श्रीपरमेश्वरः० ॥ गोपीचन्दनदानम् ॥ ममेह भुक्तिमुक्तिप्राप्तिद्वारा श्रीपतिसंतोषसिद्ध्यर्थं चातुर्मास्यनिमित्तं ब्राह्मणाय गोपीचन्दनदानम्० । तदंगब्राह्मणपू० । स्वस्त्य० । यद्वै देवांगसल्लग्नं कुंकुमादिविलेपनम् । जलक्रीडासु गोपीनां द्वारवत्या जलार्पितम् ॥ गोपीचन्दनमित्युक्तं मुनीन्द्रैः किल्बिषापहम् । तस्मादस्य प्रदानेन विष्णुर्दिशतु वांछितम् ॥ इदं गोपीचन्दनममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । दानसांगतासिद्ध्यर्थमिमा० । कृतेन गोपीचन्दनदानेन श्रीपरमेश्वरः० । कर्कसंक्रान्तौ तिलपात्रदानम् । मम ब्रह्मलोकप्राप्तिद्वारा श्रीसूर्यप्रीत्यर्थं कर्कसंक्रान्तिदक्षिणायनमहापर्वनिमित्तं ब्राह्मणाय तिलपात्रदानम० तदङ्गत्वेन ब्राह्मणपू० । स्वस्त्य० । तिलाः पुण्याः पवित्राश्च सर्वपापहराः स्मृताः । शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च । तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ अद्य दक्षिणायने इदं तिलपात्रं

यमदैवत्यममुकशर्मणे ब्राह्मणाय ब्रह्मलोकप्राप्तिपूर्वकसूर्यप्रीतिकामस्तु० । तिलपात्रदानसांगतासि द्ध्यर्थं० । अनेन तिलपात्रदानेन श्रीसूर्यः प्रीयताम्॥ हिरण्यदानम् ॥ ब्रह्मलोकप्राप्तिद्वारा श्रीसूर्य० सुवर्णदानमहं० । तदंगब्राह्मणपू० । स्वस्त्य० । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनंतपु ण्यफलदमतः शांतिं प्रयच्छ मे ॥ इदं सुवर्णमग्निदैवत्यममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकाम स्तु० सांगतासिद्ध्यर्थमि० । तेन श्रीसूर्यः प्रीयताम् ॥ वस्त्रदानम् ॥ ब्रह्मलोकप्राप्तिद्वारा श्रीसूर्य प्रीत्यर्थं कर्कसंक्रान्तिदक्षिणायनमहापर्वनिमित्तं ब्राह्मणाय वस्त्रदानमहं करिष्ये । तदंगब्राह्मणपू० । स्वस्त्य० । शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः शांतिं प्रयच्छ मे ॥ इदं वस्त्रं बार्हस्पत्यममुकशर्मणे ब्राह्मणाय ब्रह्मलोकप्राप्तिकामस्तु० । सांगतासिद्ध्यर्थमिमां० । अ नेन वस्त्रदानेन श्रीसूर्यः प्रीयताम् ॥आषाढकृष्णामावास्यायां यथाकुलाचारं दीपपूजनं कुर्यात् देश० श्रीपरमेश्वरप्रीत्यर्थमस्मत्कुलाचारप्राप्तमाषाढकृष्णामावास्यायां विहितं दीपपूजनं करिष्ये ।

दीपदेवताभ्यो नमः इति पूजयेत् ॥ (आषाढपाटी) ॥ देशकालौ संकीर्त्य यमुनानाम्न्याः मम कन्यकायाः भर्तुः मंगलानन्दक्रीडासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहात्प्रथमाब्दीयाषाढमासनिमित्तं शिष्टाचारप्राप्तं जामात्रे नानाविधक्रीडोपकरणसमर्पणं करिष्ये । तदंगत्वेनात्पूजनं क० । तदादौ नि० गणपतिपू० । गणपतिं संपूज्य जामातरं पाद्यवस्त्राद्यलंकारादिभिः संपूज्य । स्वस्त्य० । इमानि नानाविधक्रीडोपकरणानि जामात्रे तुभ्यं० । प्रतिगृह्यताम् । कृतस्य कर्मणः सांगतासिद्ध्यर्थं नानानामगोत्रान् ब्राह्मणान् गन्धादिना पू० । यान्तु देव० । अनेन कर्मणा परमेश्वरः प्रीयताम् । अन्यकर्ता चेन्ममेत्यत्र यजमानस्येति वदेत ॥ इति आषाढमासः ॥

अथ श्रावणमासः॥ रुद्रवर्तीविधिः । श्रावणशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तं प्रत्यहं सहस्रसंख्यया अन्ते एकोत्तरसप्ततिसहस्रसंख्यया अथवा प्रत्यहं त्रिसहस्रसंख्यया अन्ते त्रयोदशसहस्रसंख्यया अथवा एकदिने लक्षसंख्यया कार्पासैकादशतंतुनिर्मिताभिः रुद्रसंज्ञकवर्तिभिः गोघृताक्ताभिः शिवं

नाराजयेत् । देश० । मम सर्वसिद्धिसर्वोपद्रवनाशसौभाग्यपुत्रपौत्रवृद्धिद्वारा शिवप्रीतिशिवलोकप्राप्त्यर्थं श्रावणमासनिमित्तं पूजापूर्वकं रुद्रवर्तिभिः शिवं नीराजयिष्ये । इति संकल्प्य प्रार्थयं । देवदेवं महादेवं लक्षवर्तिभिरादरात् । नीराजयामि गौरीशं श्रावणे मासि भक्तितः ॥ प्रत्यहं शिवपूजां कृत्वा उक्तसंख्याकल्पेन रुद्रवर्तिभिर्नीराजनं कार्यम् । उद्यापनविधिस्तु रौप्यमयवृषभस्थं सुवर्णनिर्मितमुमामहेश्वरममायामधिवास्य प्रातरेकादशब्राह्मणैः सह आचार्यः घृतपायसबिल्वैः रुद्रसूक्तेन गायत्र्या मूलमन्त्रेण च होमं कुर्यात् । सपत्नीकान् एकादशविप्रान्भोजयेत् स्वयं भुञ्जीतेति । रुद्रसूक्तेन--इमा रुद्राय तवसे इति गायत्र्या--रुद्रगायत्र्या । मूलमन्त्रेण--त्र्यम्बकं यजामहे इति । प्रतिमन्त्रमष्टोत्तरशतं होमः ॥ नक्तव्रतविधिः॥ श्रावणशुक्लप्रतिपदि प्रातः स्नानं कृत्वा नित्यकर्म निर्वर्त्य नक्तव्रतं संकल्पयेत् । देश० । मम शिवलोकप्राप्त्यर्थमद्य श्रावणशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तं प्रत्यहं नक्तभोजनरूपव्रतं शिवप्रीतिकामोऽहमाचरिष्ये । प्रारब्धेऽस्मिन्व्रते देव यद्य

पूर्णं प्रिये ह्यहम् । तदा संपूर्णतां यातु प्रसादात्ते जगत्पते ॥ इति संकल्प्य मेधावी मासं नक्तव्रतं चरेत् दिवोपवासं कृत्वा पूजासंभारानाहृत्य सूर्यास्तात्प्राक् स्नात्वा संध्यादिकं कृत्वा शिवपूजनं कुर्यात् । देश० नक्तव्रतांगत्वेन विहितं शिवपूजनं० । त्र्यम्बकमन्त्रेण पञ्चाक्षरेण च शिवाय सांगाय सपरिवाराय नमः इत्युच्चार्य पूजयेत् । सूर्यास्तात्त्रिघटिकानंतरं गृहस्थैर्भोजनं कार्यं, यतिविधवापुत्रविधुरैस्तु स्वदेहद्विगुणच्छायारूपदिनाष्टमभागे पूजा भोजनं च कार्यं, तेषां रात्रिभोजननिषेधात् । भाद्रपदशुक्लप्रतिपदि नक्तभोजनसांगतार्थं यथाशक्ति ब्राह्मणान् भोजयित्वा तदनुज्ञया स्वयं भुञ्जीत॥ अथ धारणापारणाव्रतम् ॥ श्रावणशुक्लप्रतिपदि प्रातः नित्यकर्म निर्वर्त्य धारणापारणाव्रतं संकल्पयेत् । देश० । मम ब्रह्महत्यादिपातकनिरसनद्वारा शिवलोकप्राप्त्यर्थमद्य श्रावणशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तं धारणापारणारूपव्रतं शिवप्रीतिकामोऽहमाचरिष्ये, तदंगगणपतिपूजनं पुण्याहवाचनं च करिष्ये । धारणापारणाव्रतकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । कर्मणे स्वस्ति० ।

प्रारब्धेऽस्मिं० जगत्पते । धारणापारणा इति । 'उपवासो धारणा स्यात्पारणा भोजनं भवेत्' । भोजनं तु दिवैवैकवारं हविष्यान्नम् । यद्येकादश्यां पारणाप्राप्तिस्तदाप्युपवासः कार्यो न तु भोजनम् ॥ उद्यापनविधिस्तु अमावास्याया रात्रौ स्वर्णमयावुमामहेश्वरावधिवास्य । प्रातरग्निं समाधाय होमं कुर्याद्यथाविधि । त्र्यम्बकेण तु मन्त्रेण जुहुयाच्च तिलौदनम् ॥ तथैव शिवगायत्र्या जुहुयाच्च घृतौदनम् । षडक्षरेण मंत्रेण पायसं जुहुयात्ततः । स्विष्टकृदादिहोमं समाप्य ब्राह्मणान् भोजयित्वा तदाज्ञया स्वयं भुञ्जीत ॥ अथ उपवासविधिः ॥ श्रावणशुक्लप्रतिपदि प्रातर्नित्यकर्म निर्वर्त्य मासोपवासव्रतं संकल्पयेत् । मम शिवप्रसादसिद्धिद्वारा शिवलोकप्राप्त्यर्थमद्य श्रावणशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तमुपवासरूपव्रतं शिवप्रीतिकामोऽहमाचरिष्ये । मासपर्यन्तमुपवासं कृत्वाऽमायां प्रातः शिवं संपूज्य ब्राह्मणांश्च वस्त्रालंकारादिभिः संपूज्य भोजयेत् । प्रतिपदि स्वयं भुञ्जीत ॥ अथ वारप्रकरणम् ॥ श्रावणशुक्लप्रथमरविवारे मौनेनोत्थाय शीतोदकेन स्नात्वा नित्यकर्म सम्पाद्य नाग

वल्लीपर्णे रक्तचन्दनेन द्वादशरेखाभिः वर्तुलं गभस्तिसंज्ञकं सूर्यं लिखित्वा स्त्री वा पुरुषो वा पूजयेत् । देश० । मम धनपुत्रवांछितप्राप्तिरोगबन्धनिर्मुक्तिद्वारा संज्ञासहितगभस्तिसंज्ञकसूर्यप्रीत्यर्थं श्रावणमासीयरविवासरनिमित्तं पूजनं करिष्ये । कलशाद्यर्चनपूर्वकं 'ध्येयः सदा' इति ध्यात्वा । नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायण शंकरात्मने ॥ संज्ञासहितगभस्तिसंज्ञकसूर्याय नमः इति संपूजयेत् । रक्तचन्दनरक्ताक्षतजपाकुसुमादिरक्तपुष्पदूर्वा अर्पयेत् । नारिकेरबीजं शर्करासखण्डयुतं नैवेद्यम् । एवं पूजां समाप्य जानुभ्यामवनिं गत्वा द्वादशतण्डुलरक्तचन्दनजपापुष्पदूर्वाभिः प्रत्येकं मित्रादिद्वादशनामभिः द्वादशार्घ्याणि दद्यात् । एभिर्नामभिः द्वादशनमस्कारान् द्वादश प्रदक्षिणाश्च कुर्यात् । ततः—षट्तंतुनिर्मितं सूत्रं षड्भिर्ग्रन्थिभिरन्वितम् । अर्पयित्वा तु देवेशे बध्नीयात्स्वगले च तत् ॥ द्विजाय वायनं दद्याद्द्वादशापूपसंयुतम् ॥ देशकालौ० । कृतस्य रविवारव्रतस्य परिपूर्णतायै ब्राह्मणाय रविवार

व्रतविहितं द्वादशसंख्याऽपूपवायनप्रदानं करिष्ये । तदंगत्वेन ब्राह्मणपू० । स्वस्त्यस्तु० । विष्णु
रूपी सहस्रांशुः सर्वपापप्रणाशनः । अपूपान्नप्रदानेन मम पापं व्यपोहतु ॥ इदं वायनममुक० । प्रति
गृह्यताम् । साङ्गता० ददे । तेन श्रीगभस्तिसंज्ञकसूर्यः प्रीयताम् । एवं चतुर्षु वारेषु कदाचिदपि
पंचसु । उद्यापनं ततः कार्यं व्रतसंपूर्तिहेतवे । जपापुष्पैस्तिलैश्चैव होमं सवितृमन्त्रकैः ॥ सपत्नीका
द्विजा भोज्याः केवला द्वादशापि वा ॥ ततः प्रथमसोमवारे प्रातर्निशि भोजनमुपवासं वा निश्चित्य
सूर्यास्तात्प्राक् स्नात्वा सन्ध्यादिकं कृत्वा पश्चाच्छिवपूजनं कुर्यात् । तत्र संकल्पः । मम शिवलो
कप्राप्त्यर्थं श्रावणमासीयसोमवारनिमित्तं प्रदोषकाले उमामहेश्वरपूजनं करिष्ये, तदंगत्वेनासन
विधिपुरुषसूक्तन्यासकलशघण्टापूजनानि करिष्ये । 'ध्यायेन्नित्यम्' इति ध्यानान्ते । ॐ त्र्यम्बकं
यजामहे० । ॐ नमः शिवाय । उमामहेश्वराभ्यां नमः । इत्युच्चार्य पूजां कृत्वा निशि भोजनं
कुर्यात् । पुष्पसमर्पणकाले । शर्वाय नमः । भवनाशनाय० महादेवाय० उग्राय० उग्रनाथाय०

भवाय० शशिमौलिने० रुद्राय० नीलकण्ठाय० शिवाय भवहारिणे नमः । इत्येका
दशनामाभिर्नमोन्तैः एकादश पुष्पाण्यर्पयेत् । चतुर्षु पञ्चसु सोमवारेष्वेवं विधिं कृत्वोद्यापनं
कुर्यात् । उद्यापनविधिस्तु स्वर्णमयावुमामहेश्वरौ रजतवृषभस्थितौ संपूज्य प्रातः शर्वाद्ये
कादशनाम्नां प्रत्येकनाम्ना पलाशसमिद्भिरष्टोत्तरशतं जुहुयात् । ततः यवव्रीहितिलाज्यैः 'आप्या
यस्व' इति मन्त्रेण प्रतिद्रव्यमष्टोत्तरशतं जुहुयात् । ततः बिल्वपत्रैः 'त्र्यम्बकम्' इति मंत्रेण षड्वर्णेन च प्र
त्येकमष्टोत्तरशतं जुहुयात् । इति सोमवारः ॥ बुधबृहस्पतिवासरव्रतम् ॥ प्रथमबुधबृहस्पतिवासरयोः
प्रातः नित्यकर्म निर्वर्त्य भित्त्यां बुधबृहस्पती लिखित्वा स्त्रिया पुरुषेण वा पूजनात्मकव्रतं कार्यं ।
तत्र संकल्पः । मम सकलकामनासिद्धिद्वारा श्रीबुधबृहस्पतिप्रीत्यर्थं श्रावणमासीयबुधवारनिमित्तं
बुधबृहस्पतिपूजनं करिष्ये । बृहस्पतिवारनिमित्तं बुधबृहस्पतिपू० बुधबृहस्पतिभ्यां नम इत्युच्चार्य
पूजां कुर्यात् । दधिभक्तं नैवेद्यम् । मुखरोचनार्थं मूलकं च समर्प्य, एवं श्रावणे चतुर्षु पञ्चसु

वा बुधगुरुवारेषु सप्तवर्षपर्यंतं कृत्वोद्यापनं कुर्यात् । दीर्घायुःपुत्रद्रव्यवृद्धिपाकवृद्धिबुधबृहस्पति कृपादांपत्यप्रीतिधान्यवृद्धय इति यस्याः स्त्रियाः पुरुषस्य वा याः याः कामनास्ताभिः पालक धनागारपाकागारदेवागारशय्यागारधान्यागारेषु क्रमेण बुधबृहस्पती लिखित्वा पूजां कुर्यात् । बुधबृहस्पतिवारे सुवर्णमयबुधबृहस्पती अधिवास्य रात्रौ जागरणं कृत्वा प्रातः तिलाज्यचरुपामा गांश्वत्थसमित्पञ्चद्रव्यैः प्रतिदेवतामन्त्रेण अष्टोत्तरशतसंख्यया होमं कुर्यात् । ततः मातुल भागिनेयौ ब्राह्मणांश्च भोजयेत् ॥ अथ भृगुवारव्रतम् ॥ प्रथमभृगुवारे प्रातर्नित्यकर्म निर्वर्त्य भित्त्यां हरिद्रामिश्रितचन्दनेन बहुबालसहितां जीवन्तिकामूर्तिं विलिख्य पूजयेत् । दे० । ममायुष्मत्पुत्र पौत्राभिवृद्धिसकलमनोरथावाप्तिद्वारा श्रीजराजीवन्तिकादेवताप्रीत्यर्थं श्रावणमासीयभृगुवासरनि मित्तं पूजनं करिष्ये । बालसहितजीवन्तिकादेवतायै नमः इति । श्रीजराजीवन्तिकाभ्यां सबाल काभ्यां नमः इति वा पूजयेत् । ततः पुष्पार्पणकाले पुष्पमालिकां देवतागळे बद्धा पूजां समाप्य

ततः गोधूमपिष्टसंभूतान् पञ्चदीपान् कृत्वा प्रज्वाल्य नीराजनं कार्यम् । यत्र मे बालको भवेज्जीवन्तिके तत्र त्वया रक्षणीयः । इति प्रार्थ्य । स्वबालकेषु अक्षतान् निक्षिपेत् । असन्निधौ तु यत्र देशे स्वबालगमनं तद्दिशि निक्षिपेत् । ततः भोजनसमये तान् दीपान् भक्षयेत् । एवं चतुर्षु पञ्चसु वा भृगुवारेषु प्रतिवर्षं श्रावणे कार्यम् । यया स्त्रिया जीवन्तिकाव्रतं कृतं तया यावज्जन्म हरिद्वर्णवस्त्रकंचुकीकंकणादिधारणं हरिद्वर्णमण्डपाधः प्रवेशनं तंडुलोदकोल्लंघनं कारवेल्लीशाकभक्षणं च वर्ज्यम् इति शुक्रवासरः ॥ अथ शनिवारः ॥ प्रथमशनिवासरे प्रातः ब्राह्मणान् सुवासिनीश्च तिलतैलेनाभ्यज्योष्णोदकेन स्नानं कारयित्वा सकुटुम्बः स्वयमभ्यज्योष्णोदकेन स्नायात् । उपवासं कृत्वा हरिद्राचन्दनेन भित्त्यां स्तम्भे वा लक्ष्म्या सहितं नृसिंहं लिखित्वा सायंकाले यथाचारं प्रातः काले वा पूजयेत् । मम धनधान्यसमृद्धिपुत्रपौत्रसुखाभिवृद्धिपूर्वकवैकुण्ठप्राप्तिद्वारा श्रीलक्ष्मीनृसिंहप्रीत्यर्थं श्रावणमासीयशनिवारनिमित्तं पूजनं करिष्ये । श्रीलक्ष्मीनृसिं-

ह्राभ्यां नमः । इति पूजयेत् । नीलरक्तपीतपुष्पाणि तिलतैलपाचितान् खिचाडिकाकुञ्जरसंज्ञकशा-
कमाषवटकान् तैलदीपं च समर्प्य नैवेद्यपदार्थैः सहान्नेन ब्राह्मणसुवासिनीश्च भोजयेत् । स्वयं चापि
तदन्नमश्नीयात् । कुञ्जरसंज्ञकशाकमिति भाषायां महाराष्ट्रे केनाकुञ्जेति प्रसिद्धम् । एवं चतुर्षु
पञ्चसु वा शनिवारेषु प्रतिवर्षं श्रावणमासे यावज्जीवं कार्यम् । प्रातः पूजनपक्षे उपवासस्य
प्रयोजनाभावात् । तत्र शनिवारे खञ्जं ब्राह्मणं तिलतैलेनाभ्यज्य स्वयं चाभ्यज्य नित्यपूजनान्ते
लोहमयमूर्तौ तिलमाषाक्षतैः तिलतैलाभिषेकपूर्वकं शनिपूजनं कार्यम् । नृसिंहोक्ते-
नान्नेनब्राह्मभोजननैवेद्ये कार्ये । मम शनैश्चरस्यानिष्टराशिस्थितस्यापि प्रसादसिद्ध्यर्थं श्रावण
मासीयशनिवासरनिमित्तं शनैश्चरपू० । यथाधिकारं वैदिकेन मन्त्रेण नाममन्त्रेण वा संपूज्य
स्तोत्रेण स्तुवीत । एवं चतुर्षु पञ्चसु वा शनिवारेषु कार्यम् । तद्दिने मध्याह्ने हनुमत्पूजनं
कार्यम् । ममाभीष्टसिद्धिद्वारा श्रीहनुमत्प्रीत्यर्थं श्रावणमासीयशनिवारनिमित्तं पू० । हनुमते नमः

पूजयेत् तैलमिश्रसिन्दूरं जपार्कमन्दारकुसुमतैलपाचितमाषवटकस्रजश्चार्पयेत् । पूजां समाप्य हनुमानंजनीसूनुर्वायुपुत्रो महाबलः ॥ रामेष्टः फाल्गुनसखः पिंगाक्षोऽमितविक्रमः॥ उदधिक्रमणश्चैव सीताशोकविनाशनः । लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥ इति स्तुत्वा तेन वज्रतुल्यशरीरः अरोगी बलवान् धैर्यवान् बुद्धिमान् शत्रुक्षयकर्ता मित्रवृद्धिमान्वीर्यवान्कीर्तिमाँश्च जायते । आञ्जनेयालये लक्षं हनुमत्कवचं जपेत् । अणिमाद्यष्टसिद्धीनां साधकः स्वामितामियात् ॥ यक्षराक्षसवेताला दर्शनात्तस्य वेगतः ॥ पलायन्ते दश दिशः कंपिता भयविह्वलाः॥ इति॥ तद्दिने अश्वत्थपूजनं कार्यम् । मम सर्वसंपत्समृद्धिद्वारा श्रीविष्णुरूप्यश्वत्थप्रीत्यर्थं श्रावणमा० पूजनं० क० श्रीविष्णुरूप्यश्वत्थाय नमः इति पूजयेत् । आलिंगनं कुर्यात् । अस्मिन् मासे चतुर्षु पञ्चसु वा मन्दवारेष्ववश्यं कार्यम् ॥ अथ नागपूजनम् ॥ तत्रायं प्रकारः । चतुर्थ्यां कृतैकभुक्तः पञ्चम्यां प्रातर्नित्यकर्म निर्वर्त्य हरिद्रामिश्रितचन्दनेन भित्त्यां पीठे वा नवनागान् लिखित्वा मृन्मयान्वा कृत्वा

गोमयेन द्वारस्योभयतो वा यथाचारं लिखित्वा पूजयेत् । मम कुले सर्पबाधानिवृत्तिपूर्वकानन्तादिनवनागप्रीतिद्वारा विष्णुशिवलोकप्राप्त्यर्थं श्रावणशुक्लपञ्चम्यां विहितं नागपूजनं क० । अनन्ताय नमः अनन्तमावाहयामि १, वासुकये० वासुकिमा० २, शेषाय० शेषमा० ३, पद्मनाभाय० पद्मनाभमा० ४, कम्बलाय० कम्बलमा० ५, शंखपालाय० शंखपालमा० ६ धृतराष्ट्राय० धृतराष्ट्रमा० ७, तक्षकाय० तक्षकमा० ८, कालियाय० कालियमा० ९, इत्यावाह्य, ॐ भूर्भुवः स्वः अनन्तादिनवनागदेवताभ्यो नमः इति पूजयेत् । दधिदूर्वांकुरान् सुगन्धपुष्पाणि भर्जितचणकयावनालव्रीहिलाजांश्च समर्प्य पूरणपूरितगोधूमपिष्टनिर्मितमोदकान् गोधूमनिर्मितपायसनैवेद्यं च समर्पयेत् । ततः वल्मीके पूजयेन्नागान् दुग्धं चैव तु पाययेत् । घृतयुक्तं शर्कराढ्यं यथेष्टं पाययेद्बुधः । लोहपात्रे पोलिकादि न कार्यं तद्दिने नरैः ॥ भर्जितचणकयावनालव्रीहिलाजान् बालकैः सह भक्षयेत् । तेन दृढदन्ता भवन्ति ब्राह्मणान्भोजयित्वा स्वयं

भुञ्जीत । ततः वल्मीकस्य समीपे तु गायनं वाद्यमेवच । स्त्रीभिः कार्यं भूषिताभिः कार्यश्चैवो
त्सवो महान् ॥ एवं कृते कदाचिच्च सर्पतो न भयं भवेत् । एवं प्रतिसंवत्सरं कार्यम् । यावनालेति
भाषाया महाराष्ट्रे 'जोन्धळे' इति प्रसिद्धम् ॥ वर्णषष्ठी ॥ ममाक्षयसौभाग्यावाप्तिद्वारा उमामहेश्वरप्रीत्यर्थं
सूपौदनव्रतांगत्वेन विहितं ब्राह्मणाय सतण्डुलद्विदलवायनदानम० । तदंगत्वेन ब्रा० । स्वस्त्य० ।
उपायनमिदं देव व्रतसंपूर्तिहेतवे । द्विदलं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥ इदं सतण्डुलद्विदल
वायनममुकशर्मणे ब्राह्मणाय सौभाग्यावाप्तिपूर्वकमुमामहेश्वरप्रीतिकामा तुभ्यं० । सांगतासिद्ध्यर्थं० ।
तेन उमामहेश्वरौ प्रीयेताम् ॥ शीतलासप्तमी ॥ प्रातः नित्यकर्म निर्वर्त्य हरिद्रामिश्रितचन्दनेन
भित्त्यां वापीं लिखित्वा तन्मध्ये बालद्वयपुरुषत्रययुताः सप्त शीतलासंज्ञका उदकदेवताः श्ववृषभ
नरवाहनं शिबिकाश्च लिखित्वा पूजयेत् । मम पुत्रपौत्राद्यभिवृद्धिद्वारा शीतलादेवताप्रीत्यर्थं
श्रावणशुक्लसप्तम्यां शीतलाव्रतांगत्वेन विहितं पूज० । वाहनबालपुरुषसहितशीतलादेवताभ्यो

नमः । इति पूजयेत् । कर्कटीफलदध्योदनसहितं नैवेद्यं समर्पयेत् । ततो वायनं दद्यात् । मम पुत्रपौत्राद्यभिवृद्धिद्वारा श्रीशीतलादेवताप्रीत्यर्थं शीतलासप्तमीव्रतांगत्वेन विहितं ब्राह्मणायाग्निपक्वाम्रफलसहितकर्कटीफलसहितकर्कटीपर्णस्थितदध्योदनवायनदानम० । तदंगत्वेन ब्रा० । स्वस्त्य० । दध्यन्नं दक्षिणायुक्तं वाणकं फलसंयुतम् । शीतलाप्रीतये तुभ्यं ब्राह्मणाय ददाम्यहम् ॥ इदं कर्कटीपर्णस्थदध्योदनवायनमाग्निपक्वाम्रफलकर्कटीफलसहितममुकशर्मणे ब्राह्मणाय कृतस्तंकल्पसिद्धिकामा तु० । दध्योदनदानसांग० । कृतेन दध्योदनवायनेन शीतलादेवता प्रीयताम् । प्रत्यब्दं सप्त सुवासिनीर्भोजयेत् । एवं सप्त वर्षाणि कृत्वोद्यापनं कुर्यात् । वाद्देवतानां प्रतिमा एकस्मिन्स्वर्णपत्रके । नालेन सहिताः पूज्याः सायं पूर्वेऽह्नि भक्तितः ॥ प्रातर्होमं च चरुणा ग्रहहोमपुरःसरम् । अत्र नाममंत्रेण मुख्यदेवताहोमः ॥ श्रावणशुक्लद्वादश्यां शाकदानम् ॥ विष्णुप्रीतिकामनया मया मासं कृतस्य शाकवर्जनव्रतस्य सांगतार्थं ब्राह्मणाय संपादितशाकदानं क० । तदंगत्वे

न० स्वस्त्य० । उपायनमिदं देव व्रतसंपूर्तिहेतवे । शाकं तु द्विजवर्याय सहिरण्यं ददाम्यहम् ।
इदं सम्पादितशाकममुकशर्मणे ब्राह्मणाय० सांगतासिद्ध्यर्थं० । तेन श्रीमहाविष्णुः प्रीयताम् ।
ततो दधिव्रतं संकल्पयेत् । दधि भाद्रपदे मासि वर्जयिष्ये सदा हरे ॥ सभादीपः । मम सौभाग्या
वाप्तिपूर्वकपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणसभायां ब्राह्मणाय सभादीपदानं क० ।
तदंगत्वेन सभादीपपूजनं ब्राह्मणपूजनं च० । सभादीपदेवताभ्यो नमः । इति संपूज्य । ब्राह्मणं० ।
स्वस्त्य० । भो दीप ब्रह्मरूपस्त्वं ज्योतिषां प्रभुरव्ययः । सौभाग्यं देहि मे पुत्रानवैधव्यं प्रयच्छ
मे ॥ श्रावण्यां श्रवणर्क्षे च सभायामग्निसन्निधौ । सभादीपं प्रदास्यामि तुभ्यं विप्र सदक्षिणम् ॥
इमं सभादीपं सोपस्करममुकशर्मणे ब्राह्मणाय सौभाग्यावाप्तिपूर्वकपुत्रपौत्राद्यभिवृद्धिकामा तु० ।
कृतस्य सभादीपदानस्य प्रतिष्ठाफलसंसिद्ध्यर्थमिमां० । तेन श्रीपरमेश्वरः प्रीयताम् । एवं पंचवर्ष
पर्यन्तं कृत्वोद्यापनं कुर्यात् । मया सौभाग्यावाप्तिपूर्वकपुत्रपौत्राद्यभिवृद्धिकामनया कृतस्य पञ्चव

षपर्यन्तस्य लक्षादीपदानस्य परिपूर्णतायै उत्तरांगं सवस्त्रदीपिकादानरूपमुद्यापनं क० । तदंगत्वेन दीपिकापूजनं ब्राह्मणपूजनं च० । दीपिकादेवताभ्यो नमः इति पूजयेत् । स्वस्त्य० । सज्योतिस्तैल पात्रं च दीपं बाहुसमुन्नतम् । सुखं स्यादस्य दानेन शांतिरस्तु सदा मम ॥ इमां दीपिकां सोपस्करा ममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु० ॥ कृतस्य दीपिकादानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ रक्षाबन्धनम् ॥ येन बद्धो बली राजा दानवेंद्रो महाबलः। तेन त्वामपि बध्नामि रक्षे मा चल मा चल ॥ वृषभपूजा ॥ श्रावणकृष्णामायां सायंकालव्यापिन्यां गोभिः सहमृन्मयवृषभान्पूजयेत् । मम गृहे गोधनवृद्धिद्वारा श्रीशिवप्रीत्यर्थं श्रावणमासीयामावास्यानिमित्तं मृन्मयवृषभपूजनं क० । गोवृषेभ्यो,नम इति सम्पूज्य । गैरिकादिधातुभिः रंजितान् शृंगेषु स्वर्णरौप्यपाट्टिकाखचितान् पुच्छेषु कौशेयगुच्छबद्धान् पृष्ठे नानाविधाविचित्रवस्त्रयुतान् घंटायुक्तकंठान् वृषभान् कुर्यात् । दिनाष्टांशे बहिर्नीत्वा सायं ग्रामं प्रवेशयेत् । पिण्याककं च नैवेद्यमन्नं नानाविधं

चणान्।अर्पयेत्तस्य भवतु गोधनं वृद्धिगं सदा ॥ इति ॥श्रावणपाटी॥हरिशर्मणः मम पुत्रस्य भार्यायाः मंगलानन्दक्रीडासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहात्प्रथमाब्दीयश्रावणमासनिमित्तं शिष्टाचार प्राप्तं स्नुषाय नानाविधक्रीडोपकरणसमर्पणं करिष्ये । तदंगत्वेन स्नुषापू० । तदादौ नि० । गणपतिं संपूज्य, स्नुषां कुंकुमवस्त्रादिभिः संपूज्य, स्वस्त्यस्तु० । इमानि नानाविधक्रीडोपकरणानि स्नुषायै तुभ्यमहं० । कृतस्य कर्मणः० । अनेन कर्मणा परमेश्वरः प्रीयताम् । यान्तुदेव० अन्यकर्ता चेन्ममेत्यत्र यजमानस्येति वदेत्।मासमात्रं रुद्राभिषेकेण होमेन च प्रत्यक्षरं रुद्रलोके कोटिवर्षवासः । भूशयने जन्मान्तरेऽष्टोच्छीर्षतूलिकासहितपर्यंकप्राप्तिः । ब्रह्मचर्येण देहदार्ढ्यंब्रह्मणी प्राप्नोति । मौनेन बृहस्पतितुल्यवक्ता भवति । बिल्वदूर्वाचंपकमल्लिकाबृहतीधान्यलक्षेण क्रमेण श्रीशांत्यायुर्विद्या पुत्रदुःस्वप्ननाशान् प्राप्नोति । स्वप्रीतिपदार्थस्य ब्राह्मणदत्तपूर्वकत्यागेनेहामुत्र लक्षगुणा स्वाद्वन्न प्राप्तिः । ।शिवस्य पञ्चामृताभिषेकेण पञ्चामृतभोजी गोधनवानत्यंतमधुरालापी शिवप्रियो मोक्षं

प्राप्नोति । मासमात्र कोटिलक्षसहस्रशतैकलिंगपूजनेन शिवलोकप्राप्तिः । पत्रावलिभोजनेन स्वर्णपात्र भोजनो भवेत् । शाकवर्जनेन शककर्ता भवति । अनोदनहविष्यव्रताभ्यां सर्वधान्यनिधिर्भवेत् । वेद पारायणेन मन्त्रसिद्धिः पुरुषसूक्तस्य ऋक्संख्यया सहस्रावृत्त्या वर्णसंख्यया शतावृत्त्या वाऽशक्तौ केवलशतावृत्त्या वा गुरुतल्पब्रह्महत्यादिपापेभ्यो मुच्यते । शुक्लद्वितीयायामौदुम्बरव्रतेनोदुम्बरफ लगतजन्तुवद्बहुलवंशवृद्धिः । शुक्लतृतीयायां स्वर्णगौरीव्रतेन शिवप्रीतिस्सायुज्यं च । शुक्लचतुर्थ्यां दूर्वागणपतिव्रतेन संकष्टनाशपूर्विकान्ते शिवप्राप्तिः शुक्लाष्टम्यां देवीपवित्रारोपणेनाधिव्याधिशत्रु भयग्रहपीडानिवृत्तिपूर्वकसर्वयज्ञव्रतदानतीर्थस्नानजफलं भवति । शुक्लनवम्यां कुमारीदुर्गापूजनेन सर्वपापक्षयपूर्वकानेकसंपत्पुत्रपौत्रवान्परमस्थानं प्राप्नोति । शुक्लदशम्यामाशाव्रतेन ब्राह्मणक्षत्रिय वैश्यशूद्रगर्भिणीकन्यारोगिपत्नीनां च शब्दार्थराज्यवाणिज्यकृषिपुत्रलावण्यवराऽरोग्यचिरप्रवासित कांतानां क्रमेण प्राप्तिः । शुक्लकृष्णैकादश्योः क्रमेण श्रीधरजनार्दनौ संपूज्य तेन सर्वपापक्षयपूर्वक

सर्वार्थसिद्धिः । शुक्लद्वादश्यां विष्णुपवित्रारोपणेन द्वादशमासीयविष्णवर्चाफलवानैहिकसुखं भुक्त्वा वैकुंठं प्राप्नोति । शुक्लत्रयोदश्यामनंगपवित्रारोपणेन रम्यपीनोत्तुंगपयोधरचन्द्रवदनकमलेक्षण लंबातिनीलकुरलस्निग्धकेशीसुनाभिकरंभोरुगुप्तगुल्फगजगमनकामागारजिताश्वत्थपत्रबृहच्छ्रोणिकम्बु कण्ठीनानालंकारशोभनाः स्त्रियः वीर्यपुष्टिं चेति प्राप्नोति, निष्कामश्चेज्जितेन्द्रियो भवति । शुक्लचतुर्दश्यां शिवस्य पवित्रारोपणेन कैलासप्राप्तिः । शुक्लपौ० हयग्रीवोत्सवेन मोक्षः । एतान्यपि पद्मपुराणान्तर्गतश्रावणमासमाहात्म्ये दृष्टानि व्रतानि तत्रतत्र तत्तत्कामनया संकल्प्य कर्त्तव्यानि ॥ इति श्रावणमासः ॥ अथ भाद्रपदमासः ॥ ज्येष्ठागौरीपूजा ॥ देशकालौ० मम लक्ष्मीप्राप्तिद्वारा ज्येष्ठागौरीप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारैः पूजनम० । कलशादिपूजनान्ते । एह्येहि त्वं महाभागे सुरासुरनमस्कृते । ज्येष्ठे त्वं सर्वदेवानां मत्समीपगता भव ॥ ॐ भूर्भुवः स्वः ज्येष्ठागौर्यै० । आवाहयामि । तामग्निवर्णां । इति संपूज्य । जेष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमो नमः । शर्वाण्यै

ते नमस्तुभ्यं शांकर्यै ते नमो नमः ॥ इति नमस्कृत्याऽर्घ्यं दद्यात् । ज्येष्ठे श्रेष्ठे तपोनिष्ठे धर्मिष्ठे सत्यवादिनि । एह्येहि त्वं महाभागे अर्घ्यं गृह्ण सरस्वति ॥ ज्येष्ठागौर्यै नमः । अर्घ्यं समर्पयामि अनेन पूजनेन ज्येष्ठागौरी प्रीयताम्, मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत् । मूले विसर्जयेद्गौरीं त्रिदिनं व्रतमुत्तमम् ॥ अथ शुक्लद्वादश्यां दधिदानम् ॥ मया विष्णुप्रीतिकामनया मासं कृतस्य दधिवर्जन व्रतस्य सांगतार्थं ब्राह्मणाय दधिदानं क० । तदंगब्राह्मणपू० । स्वस्त्य० । दधि क्षीरोद्भवं देवपितॄणां तृप्तिकारकम् । अतस्तस्य प्रदानेन अतः शांतिं प्रयच्छ मे ॥ इदं दधिदानममुकशर्मणे ब्राह्मणाय कृत० । सांगतासि०तेन श्रीमहाविष्णुः प्रीयताम् । ततो दुग्धव्रतं संकल्पयेत् दुग्धमाश्वयुजे मासि वर्जयिष्ये सदा हरे ॥ अथ भाद्रपदकृष्णपक्षेऽविधवानवम्यां सुवासिनीभोजनसंकल्पः । अपसव्यं० । एको विष्णु० । अनेन सुवासिनीभोजनेन पत्नीस्वरूपीज० । सव्यम् । पत्नीस्थानोपविष्टायै सुवा

१ गौरी । समुद्रमथनोद्भूते ज्येष्ठादेवि नमोस्तु ते । इति पाठः ।

सिन्यै दक्षिणाप्र० । महालयश्राद्धांगतर्पणमस्मत्पित्रादीनां सकृन्महालयश्राद्धाङ्गतर्पणं क० ।
अपसव्यम् । ' अस्मत्पितरम् ' इत्यादि तर्पयेत् । सव्यम् अनेन सकृन्महालयश्राद्धांगतर्पणेन पितृ
स्वरूपी जनार्दनवा० ॥ इति भाद्रपदमासः ॥ अथाश्विनः॥ घटस्थापना ॥ ममसकुटम्बस्यामुकदेव
ताप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्धनपुत्रादिवृद्धिशत्रुपराजयविजयकीर्तिलाभप्रमुखचतुर्विध
पुरुषार्थसिद्ध्यर्थमद्यप्रभृति महानवमीपर्यन्तं प्रत्यहं त्रिकालमेककालं वाऽमुकदेवतापूजामुपवास
नक्तैकनक्तान्यतमानियमसहितामखण्डदीपप्रज्वलनं कुमारीपूजनं चण्डीसप्तशतीपाठं सुवासिन्यादि
भोजनम् , एवमादिरूपं शारदनवरात्रोत्सवाख्यं कर्म करिष्ये, देवतापूजांगत्वेन घटस्थापनं क०,
तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिस्मरणं चण्डीसप्तशतीजपार्थं ब्राह्मणवरणं च करिष्ये । गणानां
त्वा० । शांडिलासितदैवलेतित्रिप्रवरान्वितशांडिल्यगोत्रोत्पन्नः ऋग्वेदस्य आश्वलायनसूत्रशाक
लशाखाध्यायी गोविंदशर्माहमात्रेयार्चनानसःस्यावाश्वेति त्रिप्रवरान्वितमत्रिगोत्रोत्पन्नम् ऋग्वेदस्य

आश्वलायनसू० शाखाध्यायिनं कृष्णशर्माणं ब्राह्मणमस्मिन् सप्तशतीजपाख्ये कर्मणि त्वां वृणे। वृतोस्मि। ततः घटस्थापनं कुर्यात्। 'मही द्यौः' इति भूमिं स्पृष्ट्वा तस्यां भुवि अंकुरारोहणार्थं शुद्धमृदं प्रक्षिप्य, ओषधयः०। तस्यां मृदि यवादीन्प्रक्षिप्य 'आकलशेषु०' कुम्भं निधाय 'इमं मे गंगे० जलेनापूर्य। 'गन्धद्वाराम्' इति गन्धम्। 'या ओषधीः०' सर्वौषधीः। 'काण्डात्काण्डात्' इति दूर्वाः। 'अश्वत्थेवो०' पञ्चपल्लवान्।'स्योनापृथिवी' इति मृदः। 'याः फलिनीः' इति फलम्। 'सहि रत्नानि हिरण्यरूप' इति रत्नहिरण्ये प्रक्षिप्य। 'युवासुवासा' इति सूत्रेणावेष्ट्य। 'पूर्णादर्वी' इति पूर्णपात्रं निधाय। 'तत्वायामि' इति वरुणं संपूज्य तत्कलशोपरि कुलदेवताप्रतिमां संस्थाप्य पूजयेत्। स्वस्थाने एवं वा संस्थाप्य पू०। तद्यथा। न्यासकलशशंखघण्टापूजनान्ते। 'अपवित्रः' "जयन्ती मंगला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते॥ १॥ आगच्छ वरदे देवि दैत्यदर्पनिषूदनि॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये॥ २॥"

अनेन पुरुषसूक्तप्रथमर्चा चावाह्य । जयन्ती मंगला काळीति मन्त्रेण सूक्तर्ग्भिश्चासनादिषोडशोपचारैः संपूजयेत् । 'सर्वमंगलमांगल्ये' इत्यादिभिः संप्रार्थ्य प्रत्यहं बलिदानपक्षे माषभक्तेन कूष्माण्डेन वा बलिं दद्यात् । अन्ते एव वा बलिदानं न वा बलिदानम् । ततः "अखण्डं दीपकं देव्याः प्रीतये नवरात्रकम् । प्रज्वालयेदहोरात्रमेकचित्तो धृतव्रतः ॥ इत्यखण्डदीपं प्रतिष्ठापयेत् ॥ चण्डीपाठप्रकारः ॥ गोविंदशर्मणा यजमानेन वृतोऽहं सप्तशतीपाठाख्यं कर्म क० । आसनादि विधाय आधारे अन्यहस्तलिखितं पुस्तकं स्थापयित्वा, नारायणाय नमः । नराय नमः । नरोत्तमाय० । देव्यै । सरस्वत्यै० । व्यासाय० । इति नमस्कृत्य प्रणवमुच्चार्य सर्वपाठान्ते प्रणवं पठेत् ॥ पुस्तकवाचने नियमाः ॥ हस्ते पुस्तकं न धारयेत् । "अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन । कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः ॥" प्रत्यहं पूजासंकल्पः ॥ शारदनवरात्रविहितममुकदेवताप्रीत्यर्थं यथाज्ञानेन यथामि० । नवरात्रकृत्ये यथाकुलपरंपराप्राप्तादाधिकं नानुष्ठेयम् । होमादि

विस्तारस्त्वन्यत्र ज्ञेयः । सरस्वतीपूजनम् । श्रीसरस्वतीप्रीत्यर्थं मूले आवाहनं तदंगभूतं पूजनं च कु० । "या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ "इति ध्यात्वा, 'प्रणोदेवी' इति मन्त्रेण पूजयेत् । श्रीसरस्व० । पूर्वापाढासु पूजन० । आवाहन सहितां पूजां कु० । श्रीसरस्व० उत्तराषाढासु बलिदानं तदङ्गभूत पू० । पूजां कृत्वा बलिं दद्यात् । श्रवणे विसर्जनं कर्तुं तदङ्गभूतां पूजां कु० संपूज्य विसर्जयेत् ॥ विजयादशम्यां विहितं कृत्यम् ॥ मम सपरिवारस्य कीर्त्यायुर्यशोबलविजयादिलोहाभिसारिककर्मकलशोक्तफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं छत्रचामरगजाश्वादिराजचिह्नपूजां कु० । छत्रचामरादिदेवताभ्यो नमः । इति मन्त्रेण पूजयित्वा । ततः प्रार्थयेत् । मन्त्रास्तु । छत्रस्य—"यथाम्बुदश्छादयति शिवायेमां वसुन्धराम् । तथाच्छादय राजनं विजयारोग्यवृद्धये ॥ " चामरस्य—"शशाङ्ककरसंकाश क्षीरडिंडीरपाण्डुर । प्रोत्सा

श्याशु दुरितं चामरामरदुर्लभ ॥ " ध्वजस्य-"शक्रकेतो महावीर्य श्याम्रवर्णार्चयाम्यहम् ॥ पात्रिराज
नमस्तेस्तु तथा नारायणध्वज ॥ १ ॥ काश्यपेयारुणभ्रातर्नागारे विष्णुवाहन ॥ अप्रमेय दुराधर्ष
रणे देवारिसूदन ॥ २ ॥ गरुत्मान्मारुतगतिस्त्वयि सन्निहितो यतः ॥ साश्ववर्मायुधान्योधान्रक्ष
त्वं च रिपून्दह ॥ ३ ॥"पताकायाः-"हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ॥ नागकिन्नरगन्धर्व
यक्षभूतगणग्रहाः ॥१॥ प्रथमस्तु सहादित्यैर्भूतेशो मातृभिः सह ॥ शक्रः सेनापतिः स्कन्दो वरुण
श्चाश्रितस्त्वयि ॥ २ ॥ प्रदहन्तु रिपून्सर्वान् राजा विजयमृच्छतु ॥ यानि प्रयुक्तान्यरिभिरायुधानि
समन्ततः॥३॥पतन्तूपरि शत्रूणां हतानि तव तेजसा॥ हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ॥४॥
कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने ॥ शोभितासि तथैवाद्य शोभयास्मांश्च सत्वर ॥ ५ ॥ नीलान्
श्वेतानिमान्दृष्ट्वा नश्यंत्वाशु नृपारयः ॥ व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥ ६ ॥
पूतना रेवती नाम्ना कालरात्रिश्च या स्मृता । दह चाशु रिपून्सर्वान्पताके त्वं मयार्चिता ॥ ७ ॥

खड्गस्य—"असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥१॥ एतानि तव नामानि स्वयमुक्तानि वेधसा ॥ नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥ २ ॥ रोहिण्यश्च शरीरं ते दैवतं च जनार्दनः । पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥ ३ ॥ नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः ॥ भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च ॥ ४ ॥ इयं येन धृता क्षोणी हतश्च महिषासुरः ॥ तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ ५॥ " छुरिकायाः—" सर्वायुधानां प्रथमं निर्मितासि पिनाकिना ॥ शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥१॥ चण्डिकायै प्रदत्तासि सर्वदुष्टनिबर्हिणी ॥ तया विस्तारिता चासि देवानां प्रतिपादिता ॥ २ ॥ सर्वसत्त्वांगभूतासि सर्वाशुभनिबर्हिणी ॥ छुरिके रक्ष मां नित्यं शांतिं यच्छ नमोऽस्तु ते ॥ ३ ॥ कट्टारकस्य—"रक्षांगानि गजान्रक्ष रक्ष वाजिधनानि च । मम देहं सदा रक्ष कट्टारक नमोस्तु ते ॥ " धनुषः—"सर्वायुधमहामात्र सर्वदेवारिसूदन । चाप मां समरे रक्ष साकं शरवरैरिह ॥१॥ धृतं कृष्णेन

रक्षार्थं संहाराय हरेण च । त्रयीमूर्तिगतं देवं धनुरस्त्रं नमाम्यहम्॥ " कुन्तस्य--" प्रास पातय शत्रूं स्त्वमनया क्षामयाचया । गृहाण जीवितं तेषां मम सैन्यं च रक्ष्यताम्॥" चर्मणः--शर्मप्रदस्त्वं समरे चर्म सैन्ये यशोद्य मे । रक्ष मां रक्षणीयोहं तापनेय नमोस्तु ते॥"कनकदण्डस्य--"प्रोत्सारणाय दुष्टानां साधूनां रक्षणाय च ॥ ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥१ ॥ यशो देहि सुखं देहि जयदो भव भूपतेः॥ताडयस्व रिपून्सर्वान्हेमदंड नमोस्तु ते ॥ २ ॥ " दुंदुभेः--दुंदुभे त्वं सपत्नानां घोरो हृदय कंपनः॥भव भूमिपसैन्यानां तथा विजयवर्धनः॥१॥यथा जीमूतघोषेण प्रहृष्यंति च बर्हिणः ॥तथा स्तु तव शब्देन त्रस्यंत्वस्मद्विषो रणे॥२॥"शंखस्य--"पुण्यस्त्वं शंख पुण्यानां मंगलानां च मंगलम् । विष्णुना विधृतो नित्यमतः शांतिप्रदो भव॥" सिंहासनस्य--"विजयो जयदो जेता रिपुघाती शुभं करः॥दुःखहा धर्मदः शांतः सर्वारिष्टविनाशनः॥१॥एते वै संनिधौ यस्मात्तव सिंहा महाबलाः ॥ तेन सिंहासने तत्त्वं वेदैर्मन्त्रैश्च गीयसे ॥२॥त्वयि स्थितः शिवः शांतस्त्वयि शक्रः सुरेश्वरः । नमस्ते

सर्वतोभद्र भद्रदो भव भूपतेः ॥ ३॥ त्रैलोक्यजयसर्वस्व सिंहासन नमोस्तु ते ॥ " शिबिकान्दोलिकायाः–"महेन्द्रनिर्मिते दिव्ये देवराजादिसेविते । शिबिके पाहि मां नित्यं सदा त्वं सन्निधा भव ॥ अश्वस्य, गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ॥ ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥१॥ प्रभावाच्च हुताशस्य वर्धय त्वं तुरंगमान्॥तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥२॥ रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ॥ स्मर त्वं राजपुत्रस्त्वं कौस्तुभं च मणिं स्मर ॥ ३ ॥ यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा॥ भूमिहानृतवादी च क्षत्रियश्च पराङ्मुखः ॥ ४ ॥ सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ॥ व्रजाश्च तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥ ५ ॥ विकृतिं यदि गच्छेथा युद्धाध्वनि तुरंगम ॥ रिपून्विजित्य समरे सह भर्त्रा सुखी भव ॥६॥" गजस्य–"कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः ॥ सुप्रतीकोऽञ्जनो नील एतेष्टौ देवयोनयः ॥ १ ॥ तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ॥ मन्द्रो भद्रो मृगश्चैव गजः संकीर्ण एव च ॥२॥ वने

वने प्रसूतास्ते स्मर योनिं महागज ॥ यांतु त्वा वसवो रुद्रा आदित्याः समरुद्गणाः ॥ ३ ॥ भर्त्तारं रक्ष नागेन्द्र स्वामिवत्प्रतिपाल्यताम् ॥ अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥ ४ ॥ श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोनिलात् ॥ स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरंदरात् ॥ ६ ॥ युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ॥ अश्विनौ सहगन्धर्वौ पांतु त्वां सर्वतः सदा॥ ६ ॥" छत्रचामरादिराजचिह्नाभावे केवलशस्त्रपूजनं कुर्यात् । पूर्ववत्संकल्पवाक्यमुक्त्वा शस्त्रपूजनं करिष्ये । शस्त्रदेवताभ्यो नमः । इति संपूज्य छुरिकादितत्तन्मन्त्रैः प्रार्थयेत् ॥ शमीपूजनम् ॥ मम सकलामंगलशमनसकलदुष्कृतनाशनपूर्वकायुरारोग्यैश्वर्यविजयशत्रुपराजयश्रीपुण्ययात्रासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य विजयादशम्यां विहितं शमीपूजनं क० । "अमंगलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्ननाशनीं धन्यां प्रपद्येहं शमीं शुभाम् ॥" शमीदेवतायै नमः इति संपूज्य प्रार्थयेत् "शमी शमयते पापं शमी लोहितकंटका ॥ धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥ १ ॥ करिष्यमाण

यात्रायां यथाकालं सुखं मया ॥ तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥ २ ॥ शमी शमयते पापं शमी शत्रुविनाशिनी ॥ अर्जुनस्य धनुर्धारी रामस्य प्रियवादिनी ॥ ३ ॥ " इति प्रार्थ्य, कृतस्य कर्मणः सां० । अनेन पूजनेन शमीदेवता प्रीयताम् । "गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् । गीत वादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ॥ " अश्मन्तकपूजनम् ॥ मम सकलामंगलशमनसकलदुष्कृतनाशन पूर्वकायुरारोग्यैश्वर्यविजयशत्रुपराजयश्रीपुण्ययात्रासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य विजयादशम्यां विहितं शमीवृक्षाभावे अश्मन्तकपूजनं क० । अश्मन्तकाय नमः । इति संपूज्य प्रार्थयेत् "अश्म न्तक महावृक्ष महादोषनिवारण । इष्टानां दर्शनं देहि शत्रूणां च विनाशनम् ॥ " ततः कृतस्य० । अनेन पूजनेन अश्मन्तकदेवता प्रीयताम् ॥ शुक्लद्वादश्यां दुग्धदानम् ॥ मया विष्णुप्रीतिकामनया मासं कृतस्य दुग्धवर्जनव्रतस्य सांगतासिद्ध्यर्थं ब्राह्मणाय दुग्धदानं क० । तदंगब्रा० । स्वस्त्य० । "क्षीरजातास्तथा शंखाःक्षीरादमृतसंभवः । क्षीरात्क्षीरोदवत्कीर्तिः क्षीरे प्राणस्य सम्भवः ॥ तस्मात्क्षीर

प्रदानेन अतः शान्तिं प्रयच्छ मे ॥" इदं दुग्धममुकशर्मणे ब्राह्मणाय कृतसं० । सांगता० । तेन श्रीमहाविष्णुः प्रीयताम् ॥ततो द्विदलव्रतं संकल्पयेत्॥ "द्विदलं कार्तिके मासि वर्जयिष्ये सदा हरे ।" कार्तिकस्नानारंभः॥मम वाङ्मनःकायजाशेषपापक्षयद्वारा श्रीराधादामोदरप्रीत्यर्थममुकतीर्थे कार्तिकस्नानमहं क० ." नमः कमलनाभाय नमस्ते जलशायिने । नमस्तेस्तु हृषीकेश गृहाणार्घ्यं नमोस्तु ते॥" इत्यर्घ्यं दत्त्वा "कार्तिकेहं करिष्यामि प्रातः स्नानं जनार्दन॥ प्रीत्यर्थं तव देवेश दामोदर मया सह ॥ १॥ ध्यात्वाहं त्वां च देवेश जलेस्मिन्स्नातुमुद्यतः ॥तव प्रसादात्पापं मे दामोदर विनश्यतु॥२॥" इति मन्त्राभ्यां स्नात्वा पुनरर्घ्यं द्विदद्यात् । तत्र मन्त्रौ–"नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने। गृहाणार्घ्यं मया दत्तं राधया सहितो हरे॥व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं रा० ॥" आकाशदीपदानमन्त्रः ॥ "दामोदराय नभसि तुलायां दोलया सह ॥ प्रदीपं ते प्रयच्छामि नमोनन्ताय वेधसे ॥ " कोजागरः॥ कोजागरव्रतांगत्वेन विहितं लक्ष्मीन्द्रपूजनं

क० । कलशपूजनान्ते । ' ॐसक्तुमिवतितउना० ' अस्मिन् अक्षतपुंजे पूगीफले ॐभूर्भुवः स्वः लक्ष्मीं सांगां सपरिवारां सायुधां सशक्तिकामावाहयामि । 'ॐइन्द्रत्वावृषभं' अस्मिन् अक्षत० ॐभूर्भुवः स्वः इन्द्रं सांगं सपरिवारं सायुधं सशक्तिकमावाहयामि । ॐभद्रस्तु० । गृहावै० ॥ " अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुंडिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ चतुर्दन्तसमारूढो वज्रपाणिः पुरन्दरः । शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥ " ॐभूर्भुवः स्वः लक्ष्मीन्द्राभ्यां नमः ध्यायामि । ततः ' सक्तुमिव० ' ' इन्द्रत्वा० इति मन्त्राभ्यामासनाद्युपचारैः संपूज्य प्रार्थयेत् " नमस्ते सर्वदेवानां वरदासि हरिप्रिये ॥ या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥ १ ॥ विचित्रैरावतस्थाय भास्वत्कुलिशपाणये ॥ पौलोम्यालिंगितांगाय सहस्राक्षाय ते नमः ॥२॥ " इति प्रार्थ्य, कृतस्य० । दक्षिणां दत्वा, अनेन पूजनेन लक्ष्मीन्द्रौ प्रीयेताम् ।

ततः नालिकेरोदकं पीत्वा अक्षक्रीडां समाचरेत्। दुग्धादिप्राशनं यथाचारं कार्यम् ॥ नवान्नपूजा ॥ श्रीपरमेश्वरप्रीत्यर्थं नवधान्यदेवतापूजनम० । नवधान्यदेवताभ्यो नमः, इति पूजयेत् ॥ गोवत्स द्वादशी ॥ मम अभीप्सितकामनासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोवत्सद्वादशीव्रतांगत्वेन प्रदोषे विहितं सवत्सवत्सतुल्यवर्णगोः पूजनं क० । रुद्ररूपिण्यै वत्सतुल्यवर्णायै सवत्सायै गवे नमः । इति षोडशोपचारैः संपूज्य ताम्रपात्रेणार्घ्यं दद्यात् । तत्र मन्त्रः--"क्षीरोदार्णवसंभूते सुरासुरनम स्कृते। सर्वदेवमये मातर्गृहाणार्घ्यं नमोस्तु ते॥" रुद्ररूपिण्यै सवत्सायै गवे नमः, इदमर्घ्यं०। ततो माषादिवटकान् गोग्रासार्थं दद्यात्। तत्र मन्त्रः--"सुरभि त्वं जगन्मातर्देवि विष्णुपदे स्थिते। सर्व देवमये देवि मया दत्तमिमं ग्रस ॥" ततः प्रार्थयेत् "सर्वदेवमये देवि सर्वदेवैरलंकृते । मातर्ममाभि लषितं सफलं कुरु नन्दिनि ॥" अनेन पूजनेन गोदेवता प्रीयताम् । तद्दिने तैलपक्वं स्थालीपक्वं गोक्षीरं गोघृतं गोदधितक्रं च वर्जयेत् । नक्तं माषान्नभोजनं भूशय्यां ब्रह्मचर्यं च कार्यम् ॥ यमदीप

दानम् ॥ मम कुले अपमृत्युनिरसनद्वारा श्रीयमात्मकमहाविष्णुप्रीत्यर्थमिपासितत्रयोदश्यां प्रदोषे विहितं दीपदानं करिष्ये, तदंगत्वेन दीपपू०। दीपदेवताभ्यो नमः । इति ध्यानादि, संपूज्य "मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम ॥" मृत्युपाश दण्डकालश्यामासहितसूर्यजाय इमं फलतांबूलदक्षिणासहितं दीपं समर्पयामि, अनेन दीपदानेन यमात्मकमहाविष्णुः प्रीयताम् ॥ नरकचतुर्दश्यामभ्यंगस्नानविधिः ॥ वक्ष्यमाणमन्त्रेण लांगलोद्धृतलोष्टयुतापामार्गतुम्बीप्रपुन्नाडशाखानां स्नानमध्ये भ्रमणं कार्यम् । तत्र मन्त्रः--"सितालोष्टसमायुक्त सकंटकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥" अभ्यंगस्नानोत्तरं तिलकादि कृत्वा कार्तिकस्नानं कार्यम् । ततो नित्यकर्म निर्वर्त्य यमतर्पणं सव्येनापसव्येन वा कार्यम् । यमप्रीत्यर्थं नरकचतुर्दश्यां विहितं यमतर्पणं क० । यमं तर्पयामि १, धर्मराजं० २, मृत्युं० ३, अन्तकं० ४ वैवस्वतं० ५, कालं० ६, सर्वभूतक्षयं०७, औदुम्बरं ८, दध्नं०९, नीलं०१०, परमेष्ठिनं०११.

५

वृकोदरं० १२, चित्रं० १३, चित्रगुप्तं० १४, अनेन तर्पणेन यमः प्रीयताम् । अत्र चतुर्दश्यां माषपत्रशाकं भक्षयेत् ॥ लक्ष्मीपूजनम् ॥ देश०, लक्ष्मीप्रसादासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं मिथाश्रितामावास्यायां प्रदोषे विहितं लक्ष्मीपूजनम० । 'सक्तुमिव' इति मन्त्रेण षोडशोपचारैः पूजां कृत्वा प्रार्थयेत् "नमस्ते सर्वदेवानां वरदासि हरिप्रिय ॥ या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥१॥ धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ॥ भवंतु त्वत्प्रसादान्मे धनधान्यादिसंपदः॥" कृतस्य कर्मणः सां० । अनेन पूजनेन श्रीलक्ष्मीः प्रीयताम् ॥ अथ कार्तिकमासः ॥ बलिपूजा । तत्र पञ्चवर्णरंगैः यथाचारमंगणादौ गोमयेन वा विंध्यावलीसहितं बलिं द्विभुजमालिख्य पूजां कुर्यात् । ममाक्षय्यसुखप्राप्तिद्वारा विष्णुप्रीत्यर्थं बलिपूजा० पूजामन्त्रः " बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येन्द्रसुराराते पूजेयं प्रतिगृह्यताम् ॥ " विन्ध्यावलीसहित श्रीबलिराजाय नमः । इति संपूज्य अनेन पूजनेन बलिराजः प्रीयताम् । " अस्यां द्यूतं प्रकर्तव्यं प्रभाते सर्वै

मानवैः । तस्मिन् द्यूते जयो यस्य तस्य संवत्सरं जयः ॥" अत्र अभ्यंगस्नाननववस्त्रादिधारणनारीकर्तृकनीराजनमंगलादीनि कार्याणि ॥ यमद्वितीयायां भगिनीहस्ताद्भोजनं नीराजनं च ॥ कूष्माण्डदानम् ॥ ब्रह्महत्यादिदोषनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं कार्तिकशुक्लनवम्यां विहितं ब्राह्मणाय सोपस्करकूष्मांडदानमहं क० तदंगत्वेन ब्राह्मणपूजनं० । स्वस्त्य० । "ब्रह्महत्यादिपापघ्नं ब्रह्मणा निर्मितं पुरा ॥ कूष्माण्डं बहुबीजाढ्यं पुत्रपौत्रादिवृद्धिदम् ॥ १ ॥ मुक्ताप्रवालहैमादियुक्तं दत्तं तव द्विज ॥ अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे॥" इदं कूष्माण्डफलं घृतप्लुतं तिललिप्तं मुक्ताप्रवालरत्नहैमफलतांबूलदक्षिणावस्त्रादियुक्तं गोधूमराशिस्थितं वनस्पतिदैवतममुकशर्मणे ब्राह्मणाय ब्रह्महत्यादिदोषनिरसनकामस्तुभ्य०, प्रतिगृह्यताम् । कृतस्य कूष्माण्डदानस्य प्रतिष्ठाफलसिद्ध्यर्थं मिमां० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ अथ प्रबोधोत्सवस्य संक्षेपतस्तुलसीविवाहविधेश्च तन्त्रेण प्रयोगः । देश० । श्रीदामोदरप्रीत्यर्थं प्रबोधोत्सवं संक्षेपतस्तुलसीविवाहविधिं च तन्त्रेण करिष्ये

तदंगतया पुरुषसूक्तेन विधिना षोडशोपचारैस्तन्त्रेण महाविष्णुपूजां तुलसीपूजां च क० । न्यासादि विधाय, श्रीविष्णुं तुलसीं च ध्यात्वा 'सहस्रशीर्षा' इति श्रीमहाविष्णुं तुलसीं चावाह्य, 'पुरुष एव' इत्यादिभिः श्रीमहाविष्णवे दामोदराय श्रीदेव्यै तुलस्यै च नमः । 'आसनम्' इत्यादि स्नानांते मंगलवाद्यैः सुगंधितैलहरिद्राभ्यां नागवल्लीदलगृहीताभ्यामुष्णोदकेन च मंगलस्नानं विष्णवे तुलस्यै च सुवासिनीभिः कारयित्वा, स्वयं वा दत्त्वा, पञ्चामृतं समर्प्य शुद्धोदकेनाभिषिच्य वस्त्रयज्ञोपवीतचन्दनं दत्त्वा, तुलस्यै हरिद्राकुंकुमकण्ठसूत्रमंगलालंकारान्दत्त्वा, मन्त्रपुष्पान्तं पूजां समाप्य, घण्टादिवाद्यघोषेण देवं प्रबोधयेत् ॥ तत्र मन्त्राः 'इदं विष्णु०' 'योजागार०' इति आचारप्राप्तः । "ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दितवन्दनीय ॥ बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव ॥ १ ॥ इयं च द्वादशी देव प्रबोधार्थं तु निर्मिता ॥ त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥ २ ॥ उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ॥ त्वयि सुप्ते

जगत्सुप्तमुत्थिते चोत्थितं जगत् ॥६॥" एवमुत्थाप्य "चरणं पवित्रम्०" गता मेघा वियच्चैव निर्मलं निर्मला दिशः । शारदानि च पुष्पाणि गृहाण मम केशव ॥" इतिमंत्राभ्यां पुष्पांजलिं दद्यात् । अथाचा रात्तुलसीसंमुखां श्रीविष्णुप्रतिमां कृत्वा मध्येन्तःपटं धृत्वा मंगलाष्टकपद्यानि पठित्वा अन्तःपटं विसृज्याक्षतप्रक्षेपं कृत्वा दामोदरहस्ते तुलसीदानं कुर्यात् "देवीं कनकसंपन्नां कनकाभरणैर्युताम् ॥ दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ मया संवर्धितां यथाशक्त्यलंकृतामिमां तुलसीं देवीं दामोदराय श्रीधराय वराय तुभ्यमहं संप्रददे, देवपुरतः साक्षतजलं क्षिपेत् श्रीमहाविष्णुः प्रीयता मित्युक्त्वा इमां देवीं प्रतिगृह्णातु भवान् इति वदेत् । ततो देवहस्तस्पर्शं तुलस्याः कृत्वा "क इदं, कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु" इति मन्त्रमन्येन वाचयेत् यजमानः । "त्वं देवि मेऽग्रतो भूयास्तुलसीदेवि पार्श्वतः । देवि त्वं पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥" दानस्य प्रति

ष्टासिद्ध्यर्थमिमां दक्षिणां संप्रददे इति देवपुरतो दक्षिणामर्पयेत् ततः "स्वस्तिनो मिमीताश्विनं" इत्यादिस्वस्वशाखोक्तानि शांतिसूक्तानि विष्णुसूक्तानि च पठेयुः तुलसीयुताय विष्णवे महानीराजनं कृत्वा मन्त्रपुष्पं दत्त्वा सपत्नीकः सगोत्रजः सामात्यो यजमानश्चतस्रः प्रदक्षिणाः कुर्वीत । ब्राह्मणेभ्यो दक्षिणां दत्त्वा यथाशक्ति ब्राह्मणभोजनं संकल्प्य कर्मेश्वरार्पणं कुर्यात् । एवं देवं प्रबोध्य कार्तिके यद्यद्द्रव्यवर्जनं कृतं तत्तद्द्रव्यमुक्तरीत्या द्रव्यान्तरं च ब्राह्मणेभ्यो दत्त्वा व्रतसंपूर्णतां प्रार्थयेत् "इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो । न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन" इति । ततो व्रतं भगवदर्पितं कुर्यात् ॥ ततो द्विदलदानं कार्तिकशुक्लद्वादश्यां ॥ मया विष्णुप्रीतिकामनया मासं कृतस्य द्विदलवर्जनव्रतस्य सांगतासिद्ध्यर्थं ब्राह्मणाय द्विदलदानं क० । तदंग ब्राह्मणपू० । स्वस्त्य० । "उपायनमिदं देव व्रतसंपूर्तिहेतवे । द्विदलं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥" इदं द्विदलममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० सांगता० । तेन श्रीपर

मेश्वरः०॥ वैकुण्ठचतुर्दशी॥पूर्वेद्युरुपवासं कृत्वा निशीथे देश० । वैकुण्ठचतुर्दश्यां विहितं निशीथे विष्णुपूजनं क० । वैकुण्ठचतुर्दश्यां विहितमरुणोदये शिवपूजनं क० ॥ पौर्णमास्यां दीपदानम् ॥ ममोपात्तदुरितक्षयद्वारा श्रीराधादामोदरप्रीत्यर्थं कार्तिकपौर्णमासीमन्वादिमहापर्वनिमित्तं ब्राह्मणाय दीपदानमहं क०, तदंगत्वेन दीपपूजनं ब्राह्मणपूजनं च०।दीपदेवताभ्यो नमः इति पूजयेत्। "ज्योतिः शुक्रं च तेजश्च देवानां सततं प्रियः। भास्करः सर्वभूतानां दीपोऽयं प्रतिगृह्यताम् ॥" अमुं दीपममुकशर्मणे ब्राह्म० तुभ्यमहं सं०, सांगता० । तेन श्रीराधादामोदरौ प्रीयेताम् ॥ प्रत्यहं दीपदानपक्षे । कार्तिकमासनिमित्तमिति विशेषः। सर्वोपयोगी संकल्पः—अस्मिन् चातुर्मास्ये मया चीर्णस्य अमुकदानव्रतस्य अथवा अमुकवर्जनव्रतस्य वा अमुकभक्षणव्रतस्य परिपूर्णताया उत्तरांगं ब्राह्मणाय अमुकदानरूपमुद्यापनं क०, तदंगब्राह्मणपू० । स्वस्त्य० । दानमन्त्रमुक्त्वा इदममुकदानममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । सांगतासिद्ध्यर्थमि० । तेन श्रीपरमेश्वरः

प्रीयताम् ॥ लक्षतुलसी ॥ मम समस्तपापक्षयद्वारा श्रीमहाविष्णुप्रीत्यर्थं कार्तिकमासनिमित्तं तुलसीदललक्षेण विष्णुपूजनं० ॥ बिल्वः ॥ मया कृतस्य शिवप्रीतिकामनया लक्षसंख्याकबिल्वपत्रसमर्पणव्रतस्य साद्गुण्यार्थमुत्तरांगं सौवर्णमयाबिल्वपत्रसमर्पणरूपमुद्यापनं क० । ममोपात्त० कमलपुष्पलाभानुसारेण कमलपुष्पलक्षेण विष्णुपू० ॥ देहवर्त्युज्ज्वलनम् ॥ मया ज्ञाताज्ञातकृतरजःसंपर्कजनितप्रत्यवायपरिहारपूर्वकदेहवार्तिव्रतकल्पोक्तफलावाप्तिद्वारा श्रीराधादामोदरप्रीत्यर्थं पञ्चायतनसन्निधौ देहवर्तिप्रज्वलनं क०, तदंगत्वेन पूजनमहं० । अमुकपञ्चायतनदेवताभ्यो नमः । इति पूजयेत् । राधादामोदरप्रीतिकामनया मया चीर्णस्य देहवर्तिप्रज्वलनव्रतस्य परिपूर्णतायाः उत्तरांगं घृतपूरितसुवर्णवर्तियुतकांस्यपात्रदानरूपमुद्यापनं क०, तदंगब्राह्मणपू० । स्वस्त्य० ॥ "कांस्यं ब्रह्मा शिवः साक्षात्कांस्यमेव विभावसुः । कांस्यं विष्णुमयं यस्मादतः शान्तिं प्रयच्छ मे ॥" इदं सोपस्करकांस्यपात्रममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु० । सांगता० । तेन श्रीपरमे० ।

त्रिपुरदीपप्रज्वलनम् ॥ अस्माकमस्मिन्राष्ट्रे नगरे ग्रामे च ब्राह्मणादिनानावर्णमनुष्याणां गोमहिष्य श्वादिबहुविधचतुष्पदानां वनस्थकीटपतङ्गमशकाद्विपादादिजीवानां जलचराणां वृक्षशैलादिवन स्थानां च ऐहिकामुष्मिकसुखभोगफलावाप्तिद्वारा श्रीशिवप्रीत्यर्थं कार्तिकपौर्णमास्यां प्रदोषे विहितं त्रिपुराख्यदीपदानं क०, तथा च दीपपूज० । दीपदेवताभ्यो नमः इति दीपं संपूज्य, दीपदान मन्त्रः "कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः। दृष्ट्वा प्रदीपं न च जन्मभागिनो भवन्ति नित्यं श्वपचा हि विप्राः॥" अनेनैव मन्त्रेण दीपं प्रज्वालयेत् । अनेन त्रिपुराख्यदीपदानेन श्रीशिवः प्रीयताम् ॥ रौप्यम् ॥ मम शिवप्रीतिकामनया चरितस्य चातुर्मास्ये रूप्यदानव्रतस्य परिपूर्णतायै उत्तरांगं ब्राह्मणाय मधुपूरितरौप्यपात्रदानरूपमुद्यापनं करिष्ये, तदंगत्वेन ब्राह्मणपू० । स्वस्त्य०। "यस्मात्पितॄणां श्राद्धे त्वं प्रीतिद चामृतोद्भव ॥ तस्मात्तव प्रदानेन रक्ष मां भवसागरात् ॥१॥ प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा॥ शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे ॥२ ॥

इदं मधुपूरितरूप्यपात्रममुकशर्मणे ब्राह्मणाय चातुर्मास्ये रूप्यदानव्रतपरिपूर्त्तिकामस्तु० । कृत स्य रूप्यदानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० ।'तेन श्रीप०प्रीयतामिति ॥ चातुर्मास्यव्रतानां समाप्तौ दानानि ॥ नक्तव्रते वस्त्रयुग्मम् । एकान्तरोपवासे गौः । भूशयने शय्या । षष्ठकालभोजने गौः । व्रीहिगोधूमादिधान्यत्यागे सौवर्णव्रीहिगोधूमादिदानम् । कृच्छ्रव्रते गोयुग्मम् । शाकाहारे गौः । पयोमात्रभक्षणे पयोवर्जने च गौः । मधुदधिघृतवर्जने वस्त्रं गौश्च । ब्रह्मचर्ये स्वर्णम् । ताम्बूल वर्जने वस्त्रयुग्मं सपात्रसोपस्करताम्बूलदानं च । मौने घंटा । घृतकुम्भः वस्त्रद्वयं च । रंगवल्ली करणे गौः सुवर्णपद्मं च । दीपदानव्रते दीपिका वस्त्रद्वयं च । भूमिभोजने कांस्यपात्रं गौश्च । गोग्रासे गोवृषौ । प्रदक्षिणाशते वस्त्रम् । अभ्यङ्गवर्जने तैलपूर्णघटः । नखकेशधारणे मधुस पिर्हेमदानम् । गुडवर्जने गुडपूर्णं ससुवर्णं ताम्रपात्रम् । एवं लवणवर्जने लवणपूर्णताम्रपात्रम् । वृन्ताकगृञ्जनवर्जने प्रवालपूरितरौप्यमयवृन्ताकगृञ्जनदानम् । यत्र विशेषतो दानं नोक्तं तत्र स्वर्णं

गौश्च । इक्षुवर्जने रौप्यमयेक्षुदानम् ॥ अथ मार्गशीर्षमासः॥ एकभक्तम् । देश०, समस्तपापक्षयद्वारा श्रीकेशवप्रीत्यर्थं मार्गशीर्षे मासपर्यन्तमेकभक्तव्रतं करिष्ये, इति संकल्प्य मासपर्यन्तमेकभक्तं कृत्वा अमायामुद्यापनं कुर्यात् । केशवप्रीतिकामनया मया मासपर्यन्तं कृतस्य एकभक्तव्रतस्य परिपूर्णताया उत्तरांगं ब्राह्मणाय सुवर्णदानरूपमुद्यापनं क०, तदंगब्रा० । स्वस्त्य०।' हिरण्यगर्भ० 'इदं सुवर्णममुक शर्मणे ब्राह्मणायैकभक्तव्रतपरिपूर्तिकामा तु० । सांगता० । तेन श्रीकेशवः प्रीयताम् ॥ हविष्या न्नम् ॥ मम समस्तपापक्षयद्वारा श्रीकेशवप्रीत्यर्थं मार्गशीर्षे मासपर्यन्तं हविष्यान्नव्रतं क० । मास पर्यन्तं कृत्वाऽमायामुद्यापनं कुर्यात् । केशवप्रीतिकामनया मया मासं कृतस्य हविष्यभक्षणव्रतस्य परिपूर्णताया उत्तरांगं ब्राह्मणाय वासोयुगदानरूपमुद्यापनं क० । स्वस्त्य० । शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः० " इदं वासोयुगममुकशर्मणे ब्राह्मणाय हविष्य भक्षणव्रतपरिपूर्तिकामा तुभ्य० सांगता० । तेन श्रीकेशवः० ॥ मुद्गभक्षणम् ॥ मम समस्त

पाप० मासपर्यन्तं मुद्गभक्षणव्रतं क० । मासपर्यन्तं कृत्वाऽमायामुद्यापनं कुर्यात् । केशवप्रीत्य० कृतस्य मुद्गभक्षणव्रतस्य०, गोदानरूपमुद्यापनंक० । गोदानविधिना गां दत्वा प्रतिपदि ब्राह्मणान् भोजयित्वा स्वयं सुहृद्युतो भुञ्जीत ॥ पौर्णमास्यां लवणदानम् ॥ मम रूपसौभाग्यावाप्तिद्वार श्रीकेशवप्रीत्यर्थं मार्गशीर्षपौर्णमासीनिमित्तं ब्राह्मणाय चूर्णितलवणदानं क०।" यस्माद‍न्नरसाः सर्वे नोत्कृष्टा लवणं विना । शम्भोः प्रीतिकरं नित्यमतः० ॥ इदं लवणममुकशर्म० संप्रददे । तेन श्रीकेशवः० ॥ शुक्लपञ्चम्यां प्रातः नागपूजा ॥ मम नागलोकप्राप्तिद्वारा अनन्तादिनवनागप्रीत्यर्थं मार्गशीर्षशुक्लपञ्चम्यां विहितं नागपूजनं क० । नागपञ्चमीवत्पूजनं विधेयम्॥ चम्पाषष्ठी॥ मार्गशीर्ष शुक्लप्रतिपदमारभ्य षष्ठीपर्यन्तं मल्लारिप्रीत्यर्थं मल्लारिपूजनं तत्सन्निधावखण्डदीपदानं च कार्यम् । मल्लारिमार्त्तण्डप्रीत्यर्थं मल्लारिपूजनं क०।" ध्यायेन्मल्लारिदेवं कनकगिरिनिभं म्हाळसाभूषितांगं श्वेताश्वं खड्गहस्तं विबुधमुनिगणैः सेव्यमानं कृतार्थैः । युक्तांघ्रिं दैत्यमूर्ध्नि डमरुविलसित

नैशाचूर्णाभिरामं नित्यं भक्तेषु तुष्टं श्वगणपरिवृतं नित्यमोंकारगम्यम् ॥ " इति ध्यात्वा मल्लारि मार्तण्डाय नमः इति नाममन्त्रेण पूजयेत् ॥ षष्ठ्यां तळिकापूजनम् ॥ तत्प्रकारः । वैश्वदेवं कृत्वा नैवेद्यं दत्त्वा देवाग्रे गोमयेनोपलिप्ते रङ्गवल्ल्याद्यलंकृते देशे पात्रं निधाय तन्मध्ये कलशं निधाय जलेनापूर्य तस्मिन्कमलाकाराणि नागवल्लीदलानि स्थापयित्वा तदुपरि नारिकेरफलं निधाय तत्स मीपे तांबूलदक्षिणाभंडाराभिधं हरिद्राचूर्णं संस्थाप्य, देश०, मल्लारिमार्तण्डप्रीत्यर्थमस्मत्कुला चारप्राप्तं गन्धादिना तळिकापूजनं क० । तळिकायै नमः, इति मंत्रेणोपचारान् समर्प्य हरिद्राचूर्णं देवे दत्त्वा यजमानपञ्चमैश्चतुर्भिर्ब्राह्मणैः एळकोटेति शब्दमुच्चार्य तळिकोत्थापनं वारत्रयं कार्यम् । पश्चान्नाळिकेरस्फोटनं कारयित्वा तदुदकेन देवं प्रोक्ष्य तांबूलदक्षिणां नाळिकेरबीजांशं च देवे दत्त्वा पूर्ववत् त्रिवारं तळिकोत्थापनं विधेयम् । ततः चतुर्भ्यो ब्राह्मणेभ्यः हरिद्रालेपनं कृत्वा नाळिकेरबीजांशं दक्षिणां च दत्त्वा स्वयं हरिद्रां धृत्वा नाळिकेरबीजांशं भक्षयेत् । एवं चैत्रवैशाखपौर्णमास्यां श्रावण

पौर्णमास्यां विजयादशम्यां कार्तिकमार्गशीर्षपौर्णमास्यां पौषशुक्लषष्ठ्यां पौर्णमास्यां च माघ पौर्णमास्यां तण्डिकापूजनं विधेयम् । अत्र चम्पाख्यषष्ठ्यां केचिद्देवनैवेद्ये सुकन्ददानं कुर्वन्ति स्वयं भक्षयन्ति च तदुभयमप्युक्तम्, मल्लारिमाहात्म्ये सुकन्दस्य कुत्रापि स्पर्शाभावात् । स्पष्टीकृतं च तट्टीकाकृद्भिः ॥ इति मार्गशीर्षमासः ॥ अथ पौषमासः ॥ मकरसंक्रान्तौ दानानि (सुगड)॥देशका लौ० । ममाखण्डसौभाग्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीसवितृसूर्यनारायणप्रीत्यर्थमस्मिन्मकरसंक्रां त्युदगयनमहापर्वणि ब्राह्मणाय धान्यपूरितगन्धचर्चितपूगफलोपेतसोपस्करसुघटदानमहं करिष्ये, तदङ्गत्वेन ब्राह्मणपू०। ब्राह्मणं संपूज्य, स्वस्त्य०। "संक्रान्तौ मकरेऽर्के तु सुघटं धान्यपूरितम् । रवेः प्रीतिकरं दास्ये सौभाग्यं तेन जायते ॥" इमं सुघटममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु०, कृतस्य सुघटदानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० । अनेन सुघटदानेन श्रीसवितृसूर्यनारायणः प्रीयताम् ॥ ( चिलिपिली )॥ ममेह जन्मनि जन्मान्तरे च अपत्याभिवृद्धिद्वारा संज्ञापतिप्रीत्यर्थं मक

राक्योदगयननिमित्तं ब्राह्मणाय करकपूरि[illegible]वस्त्रसंवेष्टिताननस्थूलकलशदानमहं०, तदंगत्वेन करक पूरितस्थूलकलशपूजनं ब्राह्मणपूजनं च क०। करकपूरितस्थूलकलशदेवताभ्यो नमः इति संपूज्य ब्राह्मणं संपूज्य स्वस्त्य०। "करकैः पूरितं स्थूलं कलशं संयुतं फलैः। सोपस्करं प्रयच्छामि वस्त्रसंवेष्टिताननम् ॥ तेन संज्ञापतिः कुर्याद्बहुपुत्रचयान्वितास् ॥" इमं करकपूरितस्थूलकलशं वस्त्र संवेष्टिताननममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु०। कृतस्य सोपस्करस्थूलकलश दानस्य प्रतिष्ठाफलसिद्ध्यर्थमिं०। अनेन सोपस्करस्थूलकलशदानेन श्रीसंज्ञापतिः प्रीयताम् ॥ (घुसळण) ॥ मम गवादिशुभसन्तानलब्धिपूर्वकसवितृसूर्यनारायणप्रसादसिद्धिद्वारा मकरसंक्रम णोदगयनमहापर्वनिमित्तं ब्राह्मणायेक्षुवलये स्थितेक्षुदंडदधिसमन्वितताम्रमकरज्जुसहितसवस्त्र फलताम्बूलदधिमन्थनदानं करिष्ये, तदङ्गत्वेन ब्रा०। स्वस्त्य०। "इक्षुस्थितं ताम्रभाण्डमिक्षु दधिसमन्वितम् ॥ दधिनिर्मंथसंज्ञं हि ब्राह्मणाय ददाम्यहम् ॥ १ ॥ सवस्त्रं फलताम्बूलदक्षिणाभिश्च

संयुतम् ॥ गवादिशुभसन्तानलब्धिर्भूयात्सदा मम ॥ २ ॥ ” इदं सोपस्करदधिमन्थनममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु०, कृतस्य दधिमन्थनदानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० । अनेन दधिमन्थनदानेन श्रीसवितृसूर्यनारायणः प्रीयताम् ॥ ( घाणा ) ॥ मम कुले मुसलाघातनिस्तुष निरन्तरधान्यसिद्धिपूर्वकाखण्डसौभाग्यावाप्तिद्वारा श्रीसूर्यनारायणप्रीत्यर्थं मकरसंक्रांत्युदगयननिमित्तं ब्राह्मणाय उलूखलस्थितेक्षुवस्त्रसहितघाणकसंज्ञं कण्डनधान्यदानमहं० तदंगत्वेन धान्यपूजनं च क० धान्यदेवताभ्यो नमः इति धान्यराशिं संपूज्य ब्राह्मणं सम्पूज्य स्वस्त्य० । “उलूखलस्थितं धान्यं मुसलाघातनिस्तुषम् । सोपस्करं ददामीह कण्डनं प्रीतये रवेः ॥ ” इदं घाणकसंज्ञं कण्डनधान्यममुकशर्मणे ब्राह्मणाय मम कुले मुसलाघातानिरन्तरधान्यसिद्धिपूर्वकाखण्डसौभाग्यावाप्तिकामा तु०, कृतस्य घाणकसंज्ञकण्डनधान्यदानस्य प्रतिष्ठाफल० । अनेन घाणकसंज्ञकण्डनधान्यदानेन श्रीसूर्यनारायणः प्रीयताम् ॥ ( घडवाति ) ॥ ममेह जन्मनि सवितृप्रीति

द्वारा पुत्रपौत्राद्यनवच्छिन्नसन्ततिनानारागविरागवस्त्राऽवियोगप्राप्त्यर्थं मकराकोंदगयनानिमित्तं सुवासिन्यै एकवर्षपूर्तिपर्यान्तनानारागविरागसकंचुकवस्त्रदानमहं०, तदंगत्वेन सुवासिनीपू० । स्वस्त्य० । “ नानारागविरागाणि नानावर्णाकृतीनि च । वस्त्राण्यस्मत्प्रदत्तानि प्रतिगृह्णातु भामिनी ॥ ” इमानि नानारागविरागाणि नानावर्णाकृतीनि सकंचुकवस्त्राणि गंगानाम्न्यै सुवासिन्यै संकल्पितकामनासिद्धिकामा तुभ्यमहं संप्रददे न मम, कृतस्यैकवर्षपूर्तिपर्यान्तनानारागविरागसकंचुकवस्त्रदानस्य प्रतिष्ठाफलसि० । तेन श्रीसविता प्रीयताम् ॥(चिरचोळी)॥ ममेह जन्मनि जन्मान्तरे चावैधव्याद्यनेकफलावाप्तिद्वारा श्रीसवितृप्रीत्यर्थं मकराकोंदगयनानिमित्तं सुवासिन्यै सकंचुकवस्त्रदानमहं० तदङ्गत्वेन सु० । स्वस्त्य० । “ सकंचुकं सुवस्त्रं च सूर्यप्रीतिकरं सदा ॥ सुवासिन्यै प्रदास्यामि भानुर्दिशतु वांछितम् ॥” इदं सकंचुकवस्त्रं गंगानाम्न्यै सुवासिन्यै कृतसंकल्पसिद्धिकामा तु०; कृतस्य सकंचुकवस्त्रदानस्य प्रतिष्ठाफल० । तेन श्रीसविता प्रीयताम्॥ (आंवा)॥ मम जन्मजन्मान्तरे संसारोपयोगि

नानाविधाऽमत्रावाप्तिद्वाराऽक्षय्यसौभाग्यपूर्वकसवितृदेवताप्रीत्यर्थं मकरार्कनिमित्तं नानाविधमृन्म
यपात्रसमूहदानं करिष्ये, तदंगत्वेन पात्रसमूहपूजनं० । पात्रसमूहदेवताभ्यो नमः । इति मृन्मय-
पात्राणि संपूज्य जलमध्ये जलं क्षिपेत् । स्वस्त्य० । " नानाविधानि पात्राणि मृन्मयानि सुरेश्वर ।
दीनांधकृपणेभ्योहं संप्रदद्यां महामते ॥ " इमानि संपादितनानाविधमृन्मयपात्राणि दीनान्धकृपणा
दिभ्यः कृतसंकल्पसिद्धिकामा दातुमहमुत्सृजे, न मम । तेन श्रीसविता प्रीयताम् ॥ ( हळदकुंकू लु
टावयाचें ) अस्मिन्नक्षय्यसौभाग्यादिदायके उदगयनाख्यमकरसंक्रमणपुण्यकाले सवितृप्रीतिकरं
सुवासिनीभिः रजनीकुंकुमहरणं कारयिष्ये । जलमध्ये जलं पातयेत् । स्वस्त्य०।"रजनीसंभवं पिष्टं
कुंकुमं चापि मंडनम् । सौभाग्यैकनिदाने ते हरन्तु ब्राह्मणस्त्रियः ॥ " इमे हरिद्राकुंकुमे नानानाम
गोत्राः सुवासिन्यो हरन्तु न मम । तेन श्रीसविता प्रीयताम् ॥ ( नेत्रें द्यावयाचीं ) ॥ मम जन्मजन्मा
न्तरे सवितृप्रीतिद्वारा रूपसौभाग्यनेत्रतेजोभिवृद्ध्यर्थमुदगयनादिसंक्रान्तिनिमित्तं ब्राह्मणाय

वस्त्रवेष्टितादर्शदानमहं०, तदंगत्वेन आ० । स्वस्त्य० । "दर्शनाभ्यां युवामादर्शौ पुंसां स्वस्ति दायकौ । भवतं रूपसौभाग्यकीर्तिनिर्मलबुद्धिदौ ॥" इमौ वस्त्रवेष्टितादर्शौ अमुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तुभ्य०, कृतस्य वस्त्रवेष्टितादर्शदानस्य प्रतिष्ठाफलसि० । तेन श्री सविता प्रीयताम् ॥ (द्वितीयदिवे) ममाक्षय्यसौभाग्यसुतवंशाद्यभिवृद्धिद्वारा श्रीसूर्यनारायणप्रीत्यर्थं मुदगयनारंभसंक्रांतिनिमित्तं ब्राह्मणाय हीरकसंज्ञकयुग्मदीपकदानमहं०, तदंगत्वेन युग्मदीपपूजनं ब्राह्मणपूजनं च क० । हीरकसंज्ञकयुग्मदीपदेवताभ्यो नमः इति संपूज्य ब्राह्मणं संपूज्य स्वस्त्य० । "स्वच्छगोधूमराशिस्थं दीपयुग्मं घृतान्वितम् । वज्रदीपकवद्दृश्यमकाशकसुतप्रदम् ॥ वज्रद्वयप्रदानेन प्रीणातु दिनकृत्स्वयम् ।" इमौ हीरकसंज्ञयुग्मदीपौ अमुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु०, कृतस्य हीरकसंज्ञयुग्मदीपदानस्य सांगतासिद्ध्यर्थं मिमां० । तेन श्रीसूर्यनारायणः प्रीयताम् ॥ (हळदकुंकवाच्या वाटचा) ॥ मम सूर्यप्रीतिद्वारा मकर

संक्रांत्युदगयननिमित्तं ब्राह्मणाय सुखसौभाग्यमंगलप्रदरीतिपात्राधिकरणकरजनीकुंकुमदानं क०, तदंगतया ब्राह्मण० । स्वस्त्य० । " रजनीकुंकुमं रम्यं सर्वदा मंगलप्रदम् । दानेनास्य महत्सौख्यं सौभाग्यं स्यात्सदा मम ॥ " इदं रजनीकुंकुमपूरितरीतिपात्रममुकशर्मणे ब्राह्मणाय संकल्पितकामनासिद्धिकामा तु०, कृतस्य रीतिपात्राधिकरणकरजनीकुंकुमदानस्य प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्रीयताम् ॥ गुप्तदानम् ॥ ममैहिकजन्मान्तरकृतपातकनिवृत्तिद्वारा सूर्यप्रीत्यर्थं मकरसंक्रांत्युदगयननिमित्तं ब्राह्मणाय गुप्तदानं करिष्ये, तदंगब्रा० । स्वस्त्य० । ऐहिकानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यंतु ममाभीष्टप्रदानतः ॥ " इदं गुप्तदानममुकशर्मणे ब्राह्मणाय ऐहिकजन्मान्तरकृतपातकनिवृत्तिकामा० तु० । कृतस्य गुप्तदानस्य प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्रीयताम् ॥ ( अवाचितफलम् ) ॥ मम पुत्रपौत्राभिवृद्धिसौभाग्यादिमनोरथफलावाप्तिद्वारा सवितृप्रीत्यर्थमुदगयनसंक्रांतिनिमित्तं ब्राह्मणगृहे जले अवाचितफलप्रक्षेपं करिष्ये, तदंगत्वेन

ब्रा० । ब्राह्मणगृहं गत्वा जले फलं प्रक्षिप्य ब्राह्मणं संपूज्य स्वस्त्य० । "फलं मनोरथफलं प्रददा त सदा नृणाम् । पुत्रपौत्राभिवृद्धिं च अकस्माज्जलपातनात् ॥ " इदमवचितजलप्रक्षितं फलममुक शर्मणे ब्राह्मणाय पुत्रपौत्राभिवृद्धिसौभाग्यादिमनोरथफलावाप्तिकामा तु०, कृतस्य अवचितजल प्रक्षिप्तफलदानस्य प्रतिष्ठाफलसि० ॥ ( पेन्द नारळ व सुपारी यांची ) ॥ अस्मिन्नखण्डसौभाग्या दिदायके उदगयनाख्यमकरसंक्रमणमहापुण्यकाले ब्राह्मणाय श्रीसूर्यप्रीतिकरस्य अखण्डोत्तारित नालिकेरसंश्लिष्टफलसमूहस्य वस्त्रसहितस्य दानमहं करिष्ये, तदंगनालिकेरसंश्लिष्टफलसमूह पूजनं० ब्राह्मणपूजनं च क० । नालिकेरसंश्लिष्टफलसमूहदेवताभ्यो नमः इति संपूज्य स्वस्त्य० । " अखण्डोत्तारितं नालिकेरवृक्षोद्भवं शुभम् । फलव्रातमिमं दास्ये सविता प्रीयतां मम ॥" इदमख ण्डोत्तारितनालिकेरफलसमूहं सवस्त्रममुकशर्मणे ब्राह्मणाय अखण्डसौभाग्यावाप्तिकामा तु०, कृतस्य अखण्डोत्तारितनालिकेरसमूहदानस्य प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्रीयताम् ॥ ( जोडसं

क्रान्त )॥ ममेह जन्मनि जन्मान्तरे च भर्त्रा सह अखण्डितसौभाग्यावाप्त्यार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं श्रीसवितृसूर्यनारायणप्रीत्यर्थं युग्मसंक्रान्तिव्रतकल्पोक्तफलावाप्तये द्वादशब्राह्मणेभ्यो द्वादशनालिकेरफलयुग्मदानमहं०, तथा च तदुद्यापनरूपं ब्राह्मणाय मुक्ताफलयुग्मदानं क०, तदंगत्वेन ब्राह्मणपू० । ब्राह्मणान्संपूज्य, स्वस्त्य० । "फलयुग्मेन फलितं त्रैलोक्यं सचराचरम् । फलयुग्मप्रदानेन मम संतु मनोरथाः ॥" इदं फलयुग्ममसुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तुभ्य०, कृतस्य नारिकेरफलयुग्मदानस्य प्रतिष्ठाफलसि० । एवं द्वादशब्राह्मणेभ्यो दत्त्वा तदुद्यापनार्थं मुक्ताफलयुग्मं दद्यात् । स्वस्त्य० । "मौक्तिकं भूषणं विष्णोः प्रियं गौर्याः शिवस्य च । दानेनास्य शिवं मेस्तु परत्र च सुखं मम ॥" इदं मुक्ताफलयुग्ममसुकशर्मणे ब्राह्मणाय तु०, कृतस्य मुक्ताफलदानस्य प्रतिष्ठाफलसि० । तेन श्रीसवितृसूर्यनारायणः प्रीयताम् ॥ ( आघण ओयशवयाचें )॥ मम गृहे पाकाभावपरिहारद्वारा श्रीसूर्यनारायणप्रीत्यर्थमुदगयनारंभकालिकसंक्रान्तिनिमित्तं ब्राह्मण

गृहे महानसस्थस्थालीस्थातितप्तजले कुटुम्बाशनपर्याप्ततण्डुलप्रक्षेपं करिष्ये, तदंगत्वेन ब्राह्मणपू०, इति संकल्प्य, ब्राह्मणगृहं गत्वा महानसस्थस्थालीस्थजले तण्डुलान्प्रक्षिप्य, ब्राह्मणं सम्पूज्य, स्वस्त्य० ।"महानसस्थस्थालीस्थजले तप्तेऽतिदारुणे । कुटुम्बाशनपर्याप्ततण्डुलान्प्रक्षिपाम्यहम् ॥" इमान्महानसस्थस्थालीस्थातितप्तजले प्रक्षिप्तान् कुटुम्बाशनपर्याप्तान् तण्डुलानमुकशर्मणे ब्राह्मणाय मम गृहे पाकाभावपरिहारकामा तु०, कृतस्य तण्डुलदानस्य प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्री० ॥(रसरंग)॥ ममाक्षय्यसौभाग्यावाप्तिद्वारा सवितृप्रीत्यर्थं मकरार्कनिमित्तं ब्राह्मणाय रसरंगदानं क०, तदंगब्राह्मणं० । स्वस्त्य० ।"अन्नं स्वादुकरं सर्वरसश्रेष्ठं रुचिप्रदम् ॥ पुष्टिदं च शुद्धं लोके तण्डुलं प्रददाम्यहम् ॥१॥ सौभाग्यैकनिदानं तत्कुंकुमं मण्डनं परम् ॥ रजनीसंभवं दद्यात्सौभाग्य प्रीतये नमः॥इदं रसरंगममुकशर्मणे ब्राह्मणाय अक्षय्यसौभाग्यावाप्तिकामा तु०, कृतस्य, रसरंगदानस्यप्रतिष्ठा० । तेन श्रीसविता प्री०॥(स्वयंपाकाची भांडी) ॥ मम वाङ्मनःकायजाशेषपापक्षय

द्वारा श्रीसवितृप्रीत्यर्थं मकरसंक्रांत्युदगयनमहापर्वनिमित्तं ब्राह्मणाय सूपौदनतेमनपाकोपयुक्तपात्र दानं रीतिद्रव्युदकोपपात्रसहितं दंपतिभोजनपर्याप्तामान्नदानं च क०, तदंगत्वेन ब्रा० । स्वस्त्य० । " औदुंबराणि पात्राणि आरकूटमयानि च। गृहाणेमानि वै यस्माद्भास्करः प्रीयतां मम॥" इदं सूपौदनतेमनपाकोपयुक्तपात्रदानं रीतिद्रव्युदकोपपात्रसहितं दंपतिभोजनपर्याप्तामान्नदानं च अमुकशर्मणे ब्राह्मणाय वाङ्मनःकायजाशेषपापक्षयकामा तु०, कृतस्य दानस्य प्रतिष्ठाफलसि० । तेन श्रीसविता प्रीयताम् ॥ ( दळणघरट्ट ) ममाशेषपापक्षयपूर्वकाखण्डितसौभाग्यावाप्तिद्वारा श्री सूर्यप्रीत्यर्थं मकरसंक्रांतिनिमित्तं ब्राह्मणाय दलनघरट्टदानं क०, तदंगत्वेन ब्रा० । स्वस्त्य० । " गोधूमसंभवं पिष्टं घरट्टेन समन्वितम्। सोपस्करं मया दत्तं त्वं गृहाण द्विजोत्तम॥" इमं दलनघरट्टं सोपस्करममुकशर्मणे ब्राह्मणाय ममाशेषपापक्षयपूर्वकाखण्डितसौभाग्यावाप्तिकामा तु०, कृतस्य दलनघरट्टदानस्य प्रतिष्ठाफल० । तेन श्रीसविता प्रीयताम् ॥ ( पाठपोट ) मम वाङ्मनःकायजाशेषपाप

क्षयपूर्वकपितृभर्तृवंशाभिवृद्धिद्वाराश्रीसवितृप्रीत्यर्थं मकरसंक्रांतिनिमित्तं ब्राह्मणाय पृष्ठोदराख्यदानं क०, तदंगत्वे० । स्वस्त्य० । "शरावयुगलं धान्यफलतांबूलसंयुतम् । पृष्ठोदराह्वयं दानं सोदशौरसवर्धनम् ॥ब्राह्मणाय प्रयच्छामि तेन तृप्यतु भास्करः॥" इदं पृष्ठोदराह्वयममुकशर्मणे ब्राह्मणाय वाङ्मनःकायजपापक्षयपूर्वकपितृभर्तृवंशाभिवृद्धिकामा तु०, कृतस्य पृष्ठोदराह्वयदानस्य प्रतिष्ठाफलसि० । तेन श्रीसविता प्रीयताम् ॥( वाहती धार )॥ मम वंशवृद्धिवांछितान्नावाप्तिद्वारा श्रीसवितृप्रीत्यर्थमुदगयनारंभसंक्रान्तिनिमित्तं ब्राह्मणाय निर्झरक्लिन्नतण्डुलपूरितवस्त्रतांबूलदक्षिणासहितवैणवपात्रदानमहं क०, तदंगत्वेन ब्रा० स्वस्त्य० । "प्रवहन्निर्झरक्लिन्नं तण्डुलैर्द्रोणसंमितैः ॥ पूरितं वैणवं पात्रं वस्त्रतांबूलदक्षिणम् ॥ १ ॥ सुपूजितं द्विजश्रेष्ठ ददामीदं गृहाण भोः॥ तेन मे सविता दद्याद्वंशवृद्ध्यन्नवांछितम् ॥२॥ " इदं तण्डुलपूरितवैणवपात्रं वस्त्रतांबूलदक्षिणायुतममुकशर्मणे ब्राह्मणाय वंशवृद्धिवांछितान्नावाप्तिकामा०, कृतस्य सोपस्करनिर्झरक्लिन्नतंडुलपूरितवैणवपात्रदानस्य प्रतिष्ठाफलसि० ।

तेन श्रीसविता प्री० ॥ ( सिद्धस्थाली ) ॥ मम ज्ञातिबंधुसुहृद्वर्गविप्रस्वजनभोजनोत्तरस्वभोजन सिद्धिद्वारा श्रीसूर्यप्रीत्यर्थं ब्राह्मणाय उदगयनसंक्रान्तौ सिद्धस्थालीदानमहं०, तदंगत्वेन ब्रा० । स्वस्त्य० । " ज्ञातिबंधुसुहृद्वर्गविप्रेषु स्वजने तथा । अभुक्तवत्सु नाश्नीयां तथा भव वरप्रदे ॥ " इमां सिद्धस्थालीममुकशर्मणे ब्राह्मणाय ज्ञातिबंधुसुहृद्वर्गविप्रस्वजनभोजनोत्तरस्वभोजनसिद्धि कामा तु०, कृतस्य सिद्धस्थालीदानस्य प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्री० ॥ ( जयविजय ) ॥ ममाक्षय्यसौभाग्यपुत्रावाप्तिगृहजसुखाभिवृद्धिद्वारा श्रीसूर्यप्रीत्यर्थं मकरसंक्रान्त्युदगयननिमित्तं ब्राह्मणाय जयाविजयसंज्ञदीपद्वयदानं क०, तदंगत्वेन दीपद्वयपूजनं ब्राह्मण० । जयाविजयसंज्ञदी पदेवताभ्यो नमः इति संपूज्य, ब्राह्मणं च संपूज्य, स्वस्त्य० । "युवां दीपौ रूपवन्तौ ज्योतिरीशौ तथाऽव्ययौ । अवैधव्यं च मे पुत्रं देहि मे गृहजं सुखम् ॥" इमौ जयाविजयसंज्ञौ दीपौ अमुकशर्मणे ब्राह्मणाय सौभाग्यपुत्रावाप्तिगृहजसुखाभिवृद्धिकामा तु०, कृतस्य जयाविजयसंज्ञदीपद्वयदानस्य

प्रतिष्ठाफलसि० । तेन श्रीसूर्यः प्री० ॥(सासरेमाहेर)॥ मम पितृभर्तृकुलद्वयसौख्यावाप्तिद्वारा सवितृ प्रीत्यर्थं मकरसंक्रांत्युदगयननिमित्तं ब्राह्मणाय द्वाराभ्यन्तरबाह्यस्थधान्यराशिद्वयापरपर्यायकुल द्वयाख्यदानं क०, तदंगत्वेन धान्यराशिद्वयपूजनं ब्राह्मणपू० । धान्यराशिद्वयदेवताभ्यो नमः इति संपूज्य, ब्राह्मणं सं०। स्वस्त्य०। "द्वाराभ्यन्तरबाह्यस्थं धान्यराशिद्वयं महत् ॥ कुलद्वयाख्यं तद्दानं स्वस्य तत्सिद्धयेऽर्पये ॥ १ ॥ पूजितं गन्धवस्त्राद्यैरुपचारैः सदक्षिणम् ॥ तेन मे सविता दद्यात्कुल द्वयकृतं सुखम् ॥२॥" इदं कुलद्वयापरपर्यायधान्यराशिद्वयं सवस्त्रं सदक्षिणममुकशर्मणे ब्राह्मणाय पितृभर्तृकुलद्वयसौख्यावाप्तिकामा तु०, कृतस्य धान्यराशिद्वयापरपर्यायकुलद्वयाख्यदानस्य प्रतिष्ठा फलसि० । तेन श्रीसविता प्री० ॥ तिलपात्रम् ॥ ब्रह्मलोकप्राप्तिद्वारा श्रीसूर्यप्रीत्यर्थं मकरसंक्रांत्यु दगयनमहापर्वनिमित्तं ब्राह्मणाय तिलपात्रदानमहं०, तदंगत्वेन ब्राह्म० । स्वस्त्य० ।"तिलाः पुण्याः पवित्राश्च सर्वपापहराः स्मृताः ॥ शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः ॥ १॥ यानि कानि च

पापानि ब्रह्महत्यासमानि च ॥ तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ १ ॥" अद्य उदगयने इदं तिलपात्रं यमदैवतममुकशर्मणे ब्राह्मणाय ब्रह्मलोकावाप्तिपूर्वकसूर्यप्रीतिकामस्तु०, प्रतिगृह्यताम् । तिलपात्रदानसांगतासिद्ध्यर्थमि० । अनेन तिलपात्रदानेन श्रीसूर्यः प्री० ॥ वस्त्रदानम् ॥ ब्रह्मलोकावाप्तिद्वारा श्रीसूर्यप्रीत्यर्थं मकरसंक्रांत्युदगयनमहापर्वनिमित्तं ब्राह्मणाय वस्त्रदानमहं०, तदंगत्वेन ब्रा० । स्वस्त्य० " शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः शांतिं प्रयच्छ मे । " इदं वस्त्रं बार्हस्पत्यममुकशर्मणे ब्राह्मणाय ब्राह्मलोकप्राप्तिकामस्तु०, सांगतासिद्ध्यर्थं० अनेन वस्त्रदानेन श्रीसूर्यः प्री० ॥ कनकार्कबिंबदानम् ॥ ब्रह्मलोकावाप्तिपूर्वकाभीष्टकामनासिद्धिद्वारा श्रीसवितृप्रीत्यर्थं मकराकोंदगयननिमित्तं ब्राह्मणाय तिलाज्यपूर्णकांस्यपात्रस्थितकनकार्कबिंबदानमहं०, तदंगब्रा० । स्वस्त्य० । "ग्रहाणामधिपः सूर्यः पद्महस्तः प्रभाकरः । दानेनास्य रवे शांतिः सुखं चास्तु सदा मम ॥ " इदं तिलाज्यपूर्णकांस्यपात्रस्थितकनकार्कबिंबममुक

शर्मणे ब्राह्मणाय ब्रह्मलोकप्राप्तिपूर्वकाभीष्टकामनासिद्धिकामा तु०, सांगतासिद्ध्यर्थमि० । तेन श्रीसविता प्री० ॥ अन्नदानम् ॥ सूर्यलोकप्राप्तिपूर्वकक्षुधाजनितपीडापरिहारद्वारा श्रीसूर्यप्रीत्यर्थं मकरसंक्रांत्युदगयननिमित्तं ब्राह्मणाय अन्नदानमहं०, तदंगत्वा० । स्वस्त्य० । "अन्नं ब्रह्ममयं साक्षाल्लोकानां प्राणरक्षणम् । अन्नदानेन वै कामान् भुक्त्वा सायुज्यमाप्नुयात् ॥" इदमन्नममुकशर्मणे ब्राह्मणाय सूर्यलोकप्राप्तिपूर्वकक्षुधाजनितपीडापरिहारकामस्तु० कृतस्य अन्नदानस्य प्रतिष्ठा फलसि० ॥ तेन श्रीसूर्यः प्री० ॥ दीपदानम् ॥ मम दीपदानकल्पोक्तफलावाप्तिद्वारा श्रीसूर्यप्रीत्यर्थं मुदगयनारंभसंक्रांतिनिमित्तं ब्राह्मणाय दीपदानं क०, तदंगं दीपपूजनं त्रा० । दीपदेवताभ्यो नमः इति संपूज्य, ब्राह्मणं सं० । स्वस्त्य० । "ज्योतिः शुक्रं च तेजश्च देवानां सततं प्रियः । भास्करः सर्वभूतानां दीपोऽयं प्रतिगृह्यताम ॥" अमुं दीपं सोपस्करममुकशर्मणे ब्राह्मणाय कृतसंकल्प सिद्धिकामस्तु०, सांगतासि० । तेन श्रीसूर्यः प्री० ॥सप्तधान्यदानम् ॥ मम सकलकामनासिद्धिद्वारा

श्रीसवितृप्रीत्यर्थं मकरार्कोदगयनानिमित्तं सप्तब्राह्मणेभ्यः व्रीहियवमाषतिलमुद्गप्रियंगुश्यामाकानां सप्तधान्यानां दानानि क०, तदंगत्वेन ब्राह्मणपू० । ब्राह्मणान्संपूज्य' स्वस्त्य० ब्रह्मणा निर्मिताः पूर्वं व्रीहयो यज्ञसाधनाः। अनेन व्रीहिदानेन मम संतु मनोरथाः॥"इमान् व्रीहीनमुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु०।"पूर्वमेव हि यज्ञार्थं निर्मिता ब्रह्मणा यवाः। अनेन यवदानेन शांतिरस्तु सदा मम ॥" इमान्यवान्०॥"यस्माद्देहहितार्थाय विष्णोर्देहसमुद्भवाः॥ पितृतृप्तिकरा माषाः प्रयच्छन्तु मनोरथान्॥" इमान् माषान्०॥"महर्षेर्गोत्रसंभूताः काश्यपस्य तिलाः स्मृताः। तस्मादेषां प्रदानेन मम पापं व्यपोहतु॥"इमान् तिलान्० ॥ "मुद्गबीजानि वै यस्मात्प्रियाणि परमेष्ठिनः। तस्मादेषां प्रदानेन मम संतु मनोरथाः॥" इमान्मुद्गान्०॥ प्रियंगवः प्रिया यस्मादग्नेर्वै यज्ञसाधनम्। तस्मात्प्रियंगुदानेन शांतिरस्तु सदा मम॥"इमान्प्रियंगून्०॥"श्यामाकास्तु सदा पुण्या निर्मिता ब्रह्मणा पुरा। एषां दानेन वै यस्मादतः शांतिं प्रयच्छ मे ।" इमान् श्यामाकान् अमुक

शर्मणे ब्राह्मणाय० । कृतानां सप्तधान्यदानानां प्रतिष्ठाफलसिद्ध्यर्थमिमां दक्षिणां वोऽहं सं प्रददे, न मम । तेन श्रीसविता प्रीयताम् ॥ तिललड्डुकम् ॥ मम तिललड्डुकदानकल्पोक्तफलावाप्तिद्वारा सवितृप्रीत्यर्थं मकरार्कोदगयननिमित्तं ब्राह्मणाय तिललड्डुकदानमह०, तदङ्गत्वे० । स्वस्त्य० । भर्जितानां तिलानां च सगुडानां कृतं मया । लड्डुकं च गृहाणेममतः शान्तिं प्रयच्छ मे ॥ " इमं तिललड्डुकममुकशर्मणे०, सांगतासिद्ध्यर्थं० । तेन श्रीसविता प्रीयताम् । आदौ तिललड्डुकद्वयं ब्राह्मणाय पुरतः संस्थाप्य तन्मध्ये एकं ब्राह्मणाय दत्त्वा एकं स्वयं गृह्णीयात् ॥ मृन्मयपात्रस्थिततिलसंयुत पायसदानम् ॥ मम मेदिनीपतित्वप्राप्तिद्वारा सवितृप्रीत्यर्थं ब्राह्मणाय तिलसंयुतपायसपूरित मृन्मयभाण्डदानं क० तदंगत्वे० । स्वस्त्य० । " मार्तिकं भाजनं चैव पायसान्नादिपूरितम् । दानेनास्य च सौभाग्यं शान्तिरस्तु सदावयोः ॥ " इदं तिलसंयुतपायसपूरितमृन्मयभाण्डममुकशर्मणे ब्रा०, साङ्गतासि० । तेन श्रीसूर्यः प्री० । जलपात्रदानम् ॥ मम पुत्रपौत्राभिवृद्धिपूर्वकप्रपादानसहस्रफल

सिद्धिद्वारा श्रीसवितृप्रीत्यर्थं मकरार्कनिमित्तं ब्राह्मणाय जलपात्रदानं क॰, तदंगं ब्रा॰ । स्वस्त्य॰ । "त्रिलोकनाथ देवेश सर्वभूतदयानिधे । जलपात्रेण तुष्टस्त्वं प्रयच्छ मम वाञ्छितम् ॥" इदं जलपात्रममुक॰, साङ्गतासि॰ । तेन श्रीसविता प्री॰ ॥ भूमिदानम् ॥ मम भूमिदानकल्पोक्तफलावाप्तिद्वारा सूर्यप्रीत्यर्थमुदगयनारंभसंक्रान्तिनिमित्तं ब्राह्मणाय भूमिदानं क॰, तदंगं ब्रा॰ । स्वस्त्य॰ । "सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा अतःशान्तिं प्रयच्छ मे ॥" इमां भूमिममुकशर्मणे॰, साङ्गतासि॰ । तेन श्रीसविता प्री॰ ॥ गुडदानम् ॥ ममाक्षयसौभाग्यावाप्तिद्वारा सूर्यप्रीत्यर्थमुदगयनादिसंक्रान्तिनिमित्तं ब्राह्मणाय गुडदानं क॰, तदंगं ब्रा॰ । स्वस्त्य ॰। "गुडमिक्षुरसोद्भूतं रसानां परमं वरम् । दानेनानेन वै यस्माच्छान्तिरस्तु सदा गृहे ॥" इमं गुडममुकशर्मणे साङ्गतासि॰ । तेन श्रीसूर्यः प्री॰ ॥ आज्यदानम् ॥ ममाभीप्सितकामनासिद्धिद्वारा सवितृप्रीत्यर्थं मकरार्कोदगयननिमित्तं ब्राह्मणाय आज्यदानं क॰, तदंग ब्रा॰ । स्वस्त्य॰ "कामधेनुसमुद्भूतं

सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥ " इदमाज्यममुकशर्मणे० साङ्गताप्रि० । तेन श्रीसविता प्री० ॥ ताम्बूलदानम् ॥ मम सौभाग्यावाप्तिपूर्वकलक्ष्मीप्रीतिद्वारा सूर्यप्रीत्यर्थमुदगयनादिसंक्रान्तिनिमित्तं ब्राह्मणाय सोपस्करताम्बूलदानं क०, तदंगं ब्रा० । स्वस्त्य० । "तांबूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् । अस्य प्रदानाद्ब्रह्माद्याः श्रियं ददतु पुष्कलाम् ॥" इदं तांबूलममुकशर्मणे०,सांगता० । तेन श्रीसूर्यः प्री० ॥ तैलदानम् ॥मम सर्वारिष्टनिवृत्तिद्वारा सवितृप्रीत्यर्थमुदगयनादिसंक्रांतिनिमित्तं ब्राह्मणाय तैलदानं क०, तदंगं ब्रा० । स्वस्त्य० , "तैलं तिलसमुद्भूतं सर्वारिष्टनिवारकम् । हृष्टिदं पुष्टिदं चैव ममारिष्टं प्रशाम्यतु ॥ " इदं तैलममुक०, सांगता० । तेन श्रीसविता० ॥ शिवगौरी ॥ ममाखण्डसौभाग्यावाप्तिद्वारा श्रीसवितृप्रीत्यर्थं मकरसंक्रांत्युदगयनानिमित्तं ब्राह्मणाय शिवगौरीदानं क०, तदंगं शिवगौरीपूजनं ब्रा० । शिवगौरीभ्यां नमः इति पूजयित्वा ब्राह्मणपूजनान्ते स्वस्त्य० । " गुडगौरीसमाश्लिष्टं नव

नीतकृतं शिवम् । सुपूजितं प्रयच्छामि दंपत्योः प्रीतिसिद्धये ॥ शिवगौरीप्रदानेन सविता मे प्रतुष्यतु ॥" इमं गुडगौरीसंश्लिष्टनवनीतकृतशिवममुकशर्मणे ब्रा०, सांगतासि० । तेन श्रीसविता प्री० ॥ ( अतूटवल्लीदान ) ॥ ममाच्छिन्नवल्लीवत्सन्ततिवृद्धिद्वारा रविप्रीत्यर्थं मकरार्कोदगयननिमित्तं ब्राह्मणाय तिलमुष्टिपञ्चाकृताच्छिन्नवल्लीदानं क०, तदंगं ब्रा० स्वस्त्य० "अच्छिन्नवल्लीवन्मे स्या त्सन्ततिर्वेलिता बहु । तिलपिष्टकृतं मुष्टिपञ्चकं गुडमिश्रितम् ॥ ददामि तृप्तिदं भक्त्या तेन तुष्यतु मे रविः ॥" इममच्छिन्नवल्लीम०, सांगता० । तेन श्री० ॥ महानसदानम् ॥ ममेह जन्मनि जन्मान्तरे च अवैधव्याद्यनेकफलावाप्तिद्वारा सवितृप्रीत्यर्थं मकरार्कोदगयननिमित्तं ब्राह्मणायेक्षुदंडकृतेन्धनगुडमयमहानसदानमहं क० तदंगं ब्रा० । स्वस्त्य०" महानसं गुडमयमिक्षुदण्डकृतेंधनम् ॥ सर्वलोकामरहितं क्षुत्तृट्शान्तिकरं परम् ॥१॥ अदित्या च कृतं पूर्वं सोपचारं सदक्षिणम् ॥ द्रौपदीप्रत्ययकरं महानसमिदं ददे ॥ " इदमिक्षुदण्डकृतेंधनं गुडमयमहानसम०, सांगता० । तेन

श्रीस० ॥(उंसाचा फडलुटावयाचा) ॥ ममेहजन्मनि जन्मान्तरे च सौभाग्यपुत्रपौत्रसर्वकामावाप्तिपूर्वकाऽमृतानिभ्रातिमधुरसान्विताऽनेकेक्षुदण्डप्राप्तिद्वारा सवितृप्रीत्यर्थं मकरसंक्रान्त्युदगयननिमित्तं नानानामगोत्रैर्ब्राह्मणैर्यथाशक्ति भूमिष्ठेक्षुव्रातहरणं कारयिष्ये, तदंगत्वेनेक्षुव्रातपू० इक्षुव्रातदेवताभ्यो नमः इति संपूज्य जलमध्ये जलं क्षिपेत् । स्वस्त्य० । "इक्षुदण्डान् गुरुतरान् रसालान्सर्वकामदान् । ब्राह्मणेभ्यः प्रदास्यामि सविता प्रीयतां मम ॥" इममिक्षुदण्डव्रातं नानानामगोत्रा ब्राह्मणा हरंतु न मम, कृतस्य कर्मणः सां० । भूयसीं दक्षिणां० । तेन श्रीसविता० । इक्षुव्रातदानाशक्तौ अष्टोत्तरशतेक्षुदण्डान्वा स्वगृहे आनीय ब्राह्मणैर्हरणं कारयेत् । तत्पक्षेऽयमेव संकल्पः । ममेह जन्मनि० । ब्राह्मणैरष्टोत्तरशतेक्षुहरणं कारयि०, तदंगत्वेनेक्षुपू० । इक्षुदेवताभ्यो नमः । इति संपूज्य जलमध्ये० । स्वस्त्य०॥ इक्षुदण्डान्० इमानष्टोत्तरशतेक्षुदण्डान्नानानामगोत्रा ब्राह्मणा हरन्तु न मम कृतस्य कर्मणः सांगतासिद्ध्यर्थं० ब्राह्मणेभ्यः दक्षिणां दातुमहमुत्सृजे । तेन श्रीसविता०॥

( अष्टोत्तरशत नारळ लुटवावयाचे ) ॥ ममेह जन्मनि जन्मान्तरे च सौभाग्यपुत्रपौत्रमनोरथफलप्राप्तिपूर्वकापरिमितनालिकेरफलप्राप्तिद्वारा सवितृप्रीत्यर्थं मकरार्कोदगयननिमित्तं नानानामगोत्रैर्ब्राह्मणैरष्टोत्तरशतनालिकेरफलहरणं कारयिष्ये, तदंगत्वेन नालिकेरफलपू० । नालिकेरफलदेवताभ्यो नमः इति संपूज्य वस्त्रेणाच्छाद्य, स्वस्त्य० । "मनोरथफलावाप्तिकराणि सुबहून्यपि । नालिकेरफलान्यद्य दास्ये पुत्रादिवृद्धये ॥" इमान्यष्टोत्तरशतनालिकेरफलानि नानानामगोत्रा ब्राह्मणा हरन्तु न मम कृतस्य कर्मणः० भूयसीं० तेन श्रीसविता० ॥ ( गुळाचे खडे लुटवावयाचे ) ॥ ममेह जन्मानि जन्मान्तरे च सौभाग्यपुत्रपौत्राऽखण्डलक्ष्मीवांछितार्थप्राप्तिपूर्वकसर्वदागुडप्राप्तिद्वारा सवितृप्रीत्यर्थं मकरार्कोदगयननिमित्तं नानानामगोत्रैर्ब्राह्मणैरष्टोत्तरशतगुडखण्डहरणं कार०, तदङ्गत्वेन गुडखण्डपू० । गुडखण्डदेवताभ्यो नमः इति सम्पूज्य वस्त्रेणाच्छाद्य जलमध्ये० । स्वस्त्य० ।" इमानि गुडखण्डानि सर्वदा माप्रदानि च । दास्यामि सवितुः प्रीत्यै यच्छंतु मम

वांछितम् ॥" इमान्यष्टोत्तरशतगुडखण्डानि नानानामगोत्रा ब्राह्मणा हरंतु न मम । कृतस्य कर्मणः० । तेन श्रीसविता० ॥ अचलवाङ्खनम् ॥ ममाचलसौभाग्यावाप्तिद्वारा श्रीसवितृप्रीत्यर्थं मकरसंक्रांत्यु दगयनमहापर्वनिमित्तं सुवासिन्यै दधिपूरितवस्त्रवेष्टितमृद्भाण्डदानं क०, तदंगत्वेन सुवासिनीपू० । स्वस्त्य० ।"दधिपूरितमृद्भाण्डं वस्त्रसंवेष्टितं शुभम् । तस्मादस्य प्रदानेन सौभाग्यं जायतेऽक्षयम् ॥" इदं दधिपूरितवस्त्रवेष्टितमृद्भाण्डममुकनाम्न्यै सुवासिन्यै अचलसौभाग्यावाप्तिकामा तु०, सांगता० । तेन श्रीसविता प्रीयताम् ॥ अर्धोदयः ॥ देशकालौ० समुद्रमेखलायाः पृथ्व्याः सम्यग्दान फलकामोऽहमर्धोदयविहितामत्रदानं क० । उपालिप्ते देशे धौततण्डुलैरष्टदलं कृत्वा तत्र कृताग्न्यु त्तारणं कांस्यपात्रं स्थापयेत् । पायसं निक्षिप्य पायसेऽष्टदलं कृत्वा तत्कर्णिकायां हेमालिंगं निधाय कांस्यपात्रे ब्रह्माणं पायसे विष्णुं लिंगे शिवं यथाधिकारं तत्तन्मंत्रैरावाह्य पूजयेत् । ब्रह्मविष्णुमहे श्वरेभ्यो नमः । ततो विप्रं वस्त्रादिभिः संपूज्य, स्वस्त्य० । " सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयम् ।

आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम ॥ " अमुकगोत्रायामुकशर्मणे तुभ्यमिदं सुवर्णलिंगपायस युक्तममत्रं समुद्रमेखलापृथ्वीदानफलकामोऽहं संप्रददे न मम, दानस्य संपूर्णतार्थमिमां दक्षिणां तु० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ महोदये तिलपात्रम् ॥ मम वाङ्मनःकायजाशेषपापक्षयपूर्वक पृथ्वीदानसमफलावाप्तिद्वारा ब्रह्मविष्णुमहेश्वरप्रीत्यर्थं महोदयमहापर्वनिमित्तं ब्राह्मणाय तिलपात्र दानमहं क, तदंगत्वेन ब्रा० । स्वस्त्य० । "महर्षेर्गोत्रसंभूताः काश्यपस्य तिलाः स्मृताः । तस्मा देषां प्रदानेन मम पापं व्यपोहतु ॥ " इदं तिलपात्रममुकशर्मणे ब्राह्मणाय कृतसंकल्पफलावा तिका० । सांगता० । तेन श्रीब्रह्मविष्णुमहेश्वराः प्री० ॥ माघस्नानम् ॥ " माघमासमिमं पूर्णं स्नास्येऽहं देव माधव । तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि ॥ " देशका०, मम दुःखदारिद्र्यनाश श्रीविष्णुतोषणकामो मकरस्थे रवौ माघे मासि पापविनाशनं समुद्रतीर्थे माघस्नानमहं० । नामा ज्ञाने विष्णुतीर्थे स्नानमहं० । स्नानमन्त्रौ—" दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ॥ प्रातःस्नानं

दुरोऽस्मद्य माघे पापविनाशनम् ॥१॥ मकरस्थे रवौ माघे गोविन्दाच्युत माधव। स्नानेनानेन देवेश यथोक्तफलदो भव ॥" इमौ मन्त्रौ समुच्चार्य मौनेन स्नायात् ॥ अथार्घ्यदानमन्त्रः ॥ "सवित्रे प्रसवित्रे च परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥" सवित्रे नमः इदमर्घ्यं० । वस्त्रपरिधानादि नित्यकृत्यं विधाय माधवं पूजयेत् । "न वह्निं सेवयेत्स्नातो ह्यस्नातोऽपि वरानने । माघे यत्नेन संत्याज्यं मूलकं मदिरोपमम् ॥" पौषशुक्लैकादश्यां पौर्णमास्यां वा माघस्नानारंभः । माघशुक्लद्वादश्यां पौर्णमास्यां वा समापनम्॥स्नानकालः॥"उत्तमं तु सनक्षत्रं लुप्ततारं च मध्यमम्॥ सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ॥" यथोक्तोद्यापनाशक्तौ ब्राह्मणाय दक्षिणां दत्वा समाप्तिं वाचयेत् । माघस्नानव्रतसमाप्तिरस्त्विति भवन्तो ब्रुवन्तु । ब्राह्मणाः—माघस्नानव्रतसमाप्तिरस्तु॥ इति पौषमासः ॥ अथ माघमासः ॥ रथसप्तमी । ममैतज्जन्मजन्मान्तरार्जितमनोवाक्कायजज्ञाताज्ञातकृत सप्तविधपापक्षयद्वारा श्रीसूर्यप्रीत्यर्थं रथसप्तमीमन्वादिमहापर्वनिमित्तमरुणोदये गंगाभागीरथीस्नान

मह० । स्नानमंत्राः--"यद्यज्जन्मकृतं पापं मया जन्मसुजन्मसु ॥ तन्मे रोगं च शोकं च माकरी हंतु सप्तमि॥१॥ एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ॥ मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ॥ २ ॥ इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ॥ सर्वव्याधिसमायुक्तं हर माकरि सप्तमि ॥ ३ ॥" इति स्नात्वाऽर्घ्यं दद्यात् ॥ "सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन ॥ सप्तमीसहितो देव गृहाणार्घ्यं दिवाकर ॥" दिवाकराय नमः' अर्घ्यं समर्पयामि । वस्त्रपरिधानादिनित्यकर्मानन्तरमंगणे पीठादौ रक्तचन्दनेन रथस्थितसारथिसहितं सूर्यं लिखित्वा षोडशोपचारैः पूजयेत् । देश० रथसप्तमीमन्वादिमहापर्वनिमित्तं श्रीसूर्यप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारैः पूजनमहं० । कलशादिपूजनान्ते । 'ध्येयः सदा' इति ध्यात्वा, श्रीसूर्याय नमः इति नाममन्त्रेण पूजयित्वा पुष्पसमर्पणकाले सप्तधान्यार्पणं कुर्यात् सगुडनालिकेरखण्डं नैवेद्यं समर्प्य, अनेन पूजनेन सूर्यः प्रीयताम् । ततः शुष्कगोमयचूर्णेऽग्निं निधाय तत्र गोदुग्धपूर्णं सप्ततण्डुलयुतं मृद्भाण्डं स्थाप

येत् । अतितप्यमाने दुग्धे अग्रद्रव उदीच्यां प्राच्यां वा गच्छेत्तदा शुभम् । अन्यदिग्गत मशुभम् । ततः, मम सप्तविधपापक्षयपूर्वकसौभाग्यावाप्तिद्वारा श्रीसूर्यप्रीत्यर्थं रथसप्तमीमन्वादिमहापर्वनिमित्तं ब्राह्मणाय सतण्डुलसंपादितचणकादिधान्यनिर्मितद्विदलदानमहं०, तदङ्गत्वेन ब्रा० । स्वस्त्य० ।"उपायनमिदं देव व्रतसंपूर्त्तिहेतवे । द्विदलं द्विजवर्याय साहिरण्यं ददाम्यहम् ॥" इदं सतण्डुलद्विदलममुकशर्मणे ब्राह्मणाय सप्तविधपापक्षयपूर्वकसौभाग्यावाप्तिकामा तु० । दानसाङ्गतासि० । तेन श्रीसूर्यः प्रीयताम् । धान्यदानाचारश्चेद्धान्यदानसंकल्पः । मम सप्तविधपापक्षयपूर्वकसौभाग्यावाप्तिद्वारा श्रीसूर्यप्रीत्यर्थं रथसप्तमीमन्वादिमहापर्वनिमित्तं ब्राह्मणाय संपादितधान्यदानमहं०, तदङ्ग ब्रा० । स्वस्त्य० । धान्यं करोति दातारमिह लोके परत्र च ॥ तस्मात्प्रदीयते धान्यमतः शांतिं प्रयच्छ मे ॥" इदं संपादितधान्यममुक० । दानस्य साङ्गता० । तेन श्रीसूर्यः प्री० ॥ अथ शिवरात्रौ यामपूजायां संकल्पः ॥ देश०, श्रीशिवप्रीत्यर्थं शिवरात्रौ प्रथमयामपूजां क० । श्री

शङ्करप्रीत्यर्थं शिवरात्रौ द्वितीययामपू० । श्रीभवानीशङ्करप्रीत्यर्थं शिवरात्रौ महानिशि पू० ॥ निशीथ पूजायां संकल्पः श्रीमहेश्वरप्रीत्यर्थं शिवरात्रौ तृतीययामपू० । श्रीरुद्रप्रीत्यर्थं शिवरात्रौ चतुर्थ यामपू० ॥ शालग्रामदानम् ॥ मम सशैलवनकाननभूचक्रदानफलसमफलावाप्तिद्वारा श्रीमाधवप्रीत्यर्थं माघमासनिमित्तं ब्राह्मणाय शालग्रामदानमहं०, तदङ्गत्वेन श्रा० । स्वस्त्य० । "शालग्रामशिला पुण्या भुक्तिमुक्तिप्रदायिनी । शालग्रामप्रदानेन मम संतु मनोरथाः ॥" अद्य माघमासपर्वणि इमां शालग्रामशिलाममुकशर्मणे ब्राह्मणाय सशैलवनकाननभूचक्रदानफलसमफलावाप्तिकामस्तु० । कृतस्य शालग्रामदानस्य प्रतिष्ठाफलसिद्ध्यर्थमि० । तेन श्रीमाधवः प्री० ॥ ( टोपीदानम् ) ॥ मम वाङ्मनःकायजाशेषपापक्षयद्वारा श्रीमाधवप्रीत्यर्थं माघमासनिमित्तं ब्राह्मणाय ऊर्णापटमयशीर्षण्यदानमहं० तदङ्गश्रा० । स्वस्त्य० । ऊर्णा मेषसमुत्पन्ना शीतवातभयापहा । यस्मात्तुषारहारीयमतः शांतिं प्रयच्छ मे ॥" इदमूर्णापटमयशीर्षण्यममुकशर्मणे ब्राह्मणाय वाङ्मनःकायजाशेषपापक्षय

कामातु० ।कृतस्य ऊर्णापटमयशीर्षण्यदानस्य साङ्गता० । तेन श्रीमाधवःप्रीयताम् ॥इति माघमासः॥
अथ फाल्गुनमासः ॥ होलिका । देश०,सपरिवारस्य मम ढुंढाराक्षसीपीडापरिहारद्वारा श्रीपरमेश्वरप्री त्यर्थं होलिकादीपनं पूजनं च क० । दीपनमन्त्रः—"दीपयाम्यद्य ते घोरां चितिं राक्षसि सत्तमे । हिताय सर्वजगतां प्रीतये पार्वतीपतेः॥" इति दीपनं कृत्वा पूजयेत् । पूजनमन्त्रः—"असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥ " होलिकायै नमः, ध्यायामि इत्यादिमन्त्रैः । पुष्पान्तं संपूज्य, कृतस्य०दक्षिणाप्रदानं करिष्ये ॥ अनेन पूजनेन होलिकादेवता प्रीयताम् । ततो होलिकां प्रज्वाल्य"तमग्निं त्रिः परिक्रम्य शब्दैर्लिङ्गभगाङ्कितैः। तेन शब्देन सा पापा राक्षसी तृप्तिमाप्नुयात्॥" धूलिकावन्दनमन्त्रः—" वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च । अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥ " ततोऽभ्यंगस्नानं कृत्वा आम्रपुष्पोदकं प्राशयेत् ।तत्र मन्त्रः— " चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव । सचन्दनं पिबाम्यद्य आयुःकामार्थसिद्धये"इति फाल्गुन

मासः ॥ अथ नानाविधसंकल्पः ॥ ( पतीर भरावयाचे ) ॥ देश०, गर्भाधानविवाहादिमाङ्गलिकोत्तर मस्मत्कुलाचारप्राप्तं भैरवप्रीत्यर्थं भैरवनाथपत्रस्थापितात्रिशूले भैरवपूजनमनेकविधान्नेन पत्रपूरणं च करिष्ये । “ सहस्राक्षिशिरोबाहो सहस्रचरणाजर । गृहाण पूजां भगवन्वाञ्छितं सफलं कुरु ॥ ” श्रीभैरवाय सांगाय सपरिवाराय नमः, इति मन्त्रेण पूजयित्वाऽनेकविधान्नेन पत्रं पूरयेत् ॥ ( बोडण ) ॥ मम गृहे अमुकमङ्गलनिमित्तं योगेश्वरीप्रीत्यर्थं मोटणाख्यं कर्म करिष्ये, तदङ्गत्वेन योगीश्वरी पूजनं क०, इति संकल्प्य पूजां कुर्यात् । पूजामन्त्रः—“ आर्यादुर्गा देवगर्भा अंबिका भद्रकाल्यपि । भद्रा क्षेम्या क्षेमकरी नैकबाहुर्नमामि ताम् ॥ ” योगेश्वर्यै सांगायै सपरिवारायै नमः इति पूजयित्वा कृतेन पूजनेन योगेश्वरी प्रीयताम् । ततो मोटनं कार्यम् । देश०, मच्छरीरोत्पन्नकण्ड्वादिविविध पीडापरिहारकामनया कृतयोगेश्वर्युपयाचितसिद्ध्यर्थं मोटणाख्यं कर्म क० । मोटणमिति भाषया कोंकणदेशे बोडणमिति प्रसिद्धम् ॥ व्यतीपातदानम् ॥ देशका०, ममोपात्तदुरितक्षयद्वाराश्रीसवितृ

सूर्यनारायणप्रीत्यर्थं व्यतीपातमहापर्वनिमित्तं ब्राह्मणाय सुवर्णदानम॰' तदंगत्वा । स्वस्त्य॰ । "शंकुकर्णं प्रलंबोष्ठ लंबभ्रूदीर्घनासिक ॥ अष्टनेत्रचतुर्वक्त्र विस्तीर्णशतयोजन ॥ १ ॥ व्यतीपात नम स्तेस्तु सोमसूर्यसुत प्रभो ॥ यद्दानादिकृतं किञ्चित्तदनन्तमिहास्तु मे ॥" इदं सुवर्णममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामा तु॰ । सांगता॰ । अनेन सुवर्णदानेन श्रीसवितृसूर्यनारायणः प्रीयताम् ॥ बिल्वपत्रलक्षम् ॥ मया शिवप्रीतिकामनया कृतस्य लक्षसंख्याकबिल्वपत्रसमर्पणव्रतस्य साद्गुण्यार्थमुत्तरांगं सौवर्णमयबिल्वपत्रसमर्पणरूपमुद्यापनं क॰ ॥ कमलपुष्पलक्षम् ॥ ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं कमलपुष्पलाभानुसारेण कमलपुष्पलक्षेण विष्णुपूजनं क॰ ॥ सिंहस्थ॰ ॥ मम समस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य ज्येष्ठशुक्लैकादशीभानुवारव्यतीपातपर्वणि सिंहराशिस्थबृहस्पतिमहापर्वनिमित्तं गोदावर्याः सकाशादानीतोदकेन स्नानमहं क॰, तदंग त्वेन गोदावरीपूजनादि क॰, तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिस्मरणं क॰ । श्रीगोदावर्यै

नमः, इति पूजयेत् । वायनं समर्प्य स्नात्वा भूयसीं दद्यात् ॥ कन्यागतस्नानम् ॥ मम वाङ्मनःकाय
जाशेषपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्याराशिस्थितबृहस्पतिमहापर्वनिमित्तमद्य वैशाखशुक्ल
पौर्णमासीमहापर्वणि कृष्णावेण्याः सकाशादानीतोदकेन कृष्णावेणीस्नानमहं क०, तदंगत्वेन
कृष्णावेणीपूजां तस्यै वायनसमर्पणं च क० तदादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिस्मरणं क० ।
कृष्णावेण्यै नमः । अनेन मन्त्रेण षोडशोपचारैः संपूज्यानन्तरं वायनं समर्प्य पश्चात्स्नानं कार्यम् ।
सायमौपासनशेषहोमः । ममोपात्त०र्थं द्वितीयासायंकालमारभ्य चतुर्दशीसायमवधिकानौपासन
शेषहोमानपकृष्यैकतन्त्रेण तंडुलैर्होष्यामि । अनेन सायंशेषहोमाख्येन कर्मणा ॥ प्रातरौपासन
शेषहोमः ॥ ममोपात्त० तृतीयाप्रातःकालमारभ्य पर्वप्रातरवधिकानौपासनशेषहोमानपकृष्यैक
तन्त्रेण तंडुलैर्होष्यामि । अनेन प्रातःशेषहोमाख्येन कर्मणा० पक्षहोमः ॥ ममोपात्त०र्थं प्रतिपत्सायं
कालमारभ्य चतुर्दशीसायमवधिकानौपासनपक्षहोमानपकृष्यैकतन्त्रेण तंडुलैर्होष्यामि । अनेन

द्धार्थं पक्षहोमाख्येन कर्मणा० । ममोपात्त० र्थं प्रातिपत्प्रातःकालमारभ्य पर्वप्रातरवधिकान्प्रातरौपासन पक्षहोमानपकृष्यैकतन्त्रेण तंडुलैर्हो०। अनेन प्रातः पक्षहोमाख्येन कर्मणा० ॥ अथ गोदानविधिः ॥ देश०, श्रीपरमेश्वरप्रीतिकामो गोदानं करिष्ये, तदंगं ब्राह्मणवरणं तत्पूजनं गोपूजनं च क० करि ष्यमाणगोदाने प्रतिग्रहीतारं त्वामहं वृणे । महाविष्णुस्वरूपिणे गोप्रतिग्रहीत्रे ब्राह्मणाय इदमासनम् 'तव पादोदकं तीर्थं०,।पाद्यम् ।'भूमिदेवाग्र्य०'।अर्घ्यम् । "विष्णुरूपिन्द्विजश्रेष्ठ भूदेव पंक्तिपावन॥ यज्ञरूप नमस्तेस्तु पात्ररूप नमोस्तु ते॥" आचमनीयम् । अयं मन्त्रः सर्वपूजायां वक्तव्यः । वस्त्रादि मन्त्रपुष्पान्तं समाप्य प्रार्थयेत् ;" त्वं देव सर्वगुणमन्दिर सर्वभूत विश्वेश्वर त्रिपथगोदधिपर्वता नाम् । त्वद्दानशाक्तिशकलीकृतपापकोट्यः प्राप्तोऽस्मिन्निर्वृतिमतीव परां नमामि॥"शृंगमूले ब्रह्मविष्णू न्यसामि । शृंगाग्रे सर्वतीर्थानि न्य० । शिरोमध्ये महादेवं न्य० । ललाटाग्रे महादेवीं न्य० । नासा वंशे षण्मुखं न्य० । कर्णयोरश्विनौ देवौ न्य० । चक्षुषोः शशिभास्करौ न्य० । दन्तेषु सर्ववायून्

न्य० । जिह्वायां वरुणं न्य० । हुङ्कारे सरस्वतीं न्य० । उरसि साध्यान् न्य० । चतुष्पादेषु धर्मं न्य०। खुरमध्ये गन्धर्वान् न्य०। खुराग्रे पन्नगान् न्य० । खुरपार्श्वे अप्सरसो न्य०। पृष्ठे एकादशरुद्रान् न्य० । सर्वसन्धिषु वसून् न्य० । श्रोणितटे पितॄन् न्य० लांगूले सोमं न्य० । बालेषु आदित्य रश्मीन् न्य०। गोमूत्रे गङ्गां न्य० । क्षीरे सरस्वतीं न्य । दध्नि नर्मदां न्य० । सर्पिषि हुताशनं न्य० । रोमसु त्रयस्त्रिंशत्कोटिदेवान्न न्य० । उदरे पृथिवीं सकाननां न्य० । पयोधरेषु चतुःसागरान् न्य० । "सौरभेयि सर्वहिते पवित्रे पापनाशिनि । प्रतिगृह्ण मया दत्तं पाद्य त्रैलोक्यवन्दिते ॥" रुद्ररूपिण्यै गवे नमः पाद्यम् ।" सर्वदेवमये देवि सर्वतीर्थमये शुभे । गृहाणार्घ्यं मया दत्तं सौरभेयि नमोऽस्तु ते॥"अर्घ्यम् ।" देहस्था या च रुद्राण्याः शङ्करस्य सदा प्रिया धेनुरूपेण सा देवी मम पापं व्यपो हतु" आचमनीयम् ।"या लक्ष्मीः सर्वभूतेषु या च देवेष्ववस्थिता । धेनुरूपेण० तु॥"स्नानम् मांग लिकस्नानम्॥"आच्छादनं गवे दद्यात्सम्यक् शुद्धं सुशोभनम्। सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरी"

वस्त्रम् । यज्ञोपवीतम् । "सर्वदेवप्रियं देवि चन्दनं चन्द्रसन्निभम् । कस्तूरीकुंकुमाढ्यं च प्रीत्यर्थं प्रति गृह्यताम् ॥" चन्दनम् । अक्षताश्च० । हरिद्राकुंकुमम् । शृंगभूषार्थं सुवर्णशृंगे चरणभूषार्थं रजतखुरान् । पृष्ठभू० ताम्रपृष्ठम् । पुच्छभू० मौक्तिकम् । कण्ठभूषार्थं घण्टाम् । दोहनार्थं दोहनपात्रम् । सर्वालंकारार्थं यथाशक्ति द्रव्यम् । "गवामंगेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥" पुष्पम् । गोः अग्रपादौ पूजयामि । गोः आस्यं पू० । गोर्नासावंशं पू० । गोर्नेत्रे० । गोः कर्णौ० । गोः ककुदं पू० । गोः पश्चिमपादौ० । गोः स्तनान्पू० । गोः सर्वांगं पूजयामि । पूर्ववत् शृंगमूले ब्रह्मविष्णवादिदेवताः संपूज्य "या लक्ष्मीः सर्वभूतेषु या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥" इति मालां बध्नीयात् । "देवद्रुमरसोद्भूतं गोघृतेन समन्वितम् । प्रयच्छामि महाभागे धूपोऽयं प्रतिगृह्यताम् ॥" धूपम् । आनन्दकृत्सर्वलोके देवानां च सदा प्रिये । गौस्त्वं पाहि जगन्नाथे दीपोऽयं० ॥" दीपम् । "सुरभि त्वं जगन्मात

देवि विष्णुपदे स्थिते । सर्वदेवमये देवि मया दत्तमिमं ग्रस ॥ १ ॥ सौरभेय्यः शुभाः श्रेष्ठाः पवित्राः पुण्यराशयः ॥ प्रतिगृह्णन्त्विमं ग्रासं गावस्त्रैलोक्यमातरः ॥ २ ॥ अन्नमेव परं गावो देवानां हविरुत्तमम् ॥ पावनं सर्वभूतानां गावः शरणमुत्तमम् ॥ ३ ॥" गोग्रासनैवेद्यम् । फलेन फ० । पूगीफलं मह० । तांबूलम् । हिरण्यगर्भ० । दक्षिणाम् ० । कर्पूरदीपम् । "गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम् ॥" "आगावो०" प्रदक्षिणाम् । " पञ्च गावः समुत्पन्ना मथ्यमाने महार्णवे । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः ॥" नमस्कारान् " धेनुस्त्वं पृथिवी सर्वा यस्मात्केशवसन्निभा । सर्वपापहरा नित्यमतः शांतिं प्रयच्छ मे ॥ " मन्त्र पुष्पम् । "देहस्था या च रुद्राण्याः शंकरस्य सदा प्रिया ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥" प्रार्थनाम् । अनेन पूजनेन गोदेवता प्रीयताम् । ततः सवत्सां गां प्राङ्मुखीमवस्थाप्य दाता पुच्छदेशे प्राङ्मुखस्तिष्ठेत् पात्रभूतो विप्रस्तत्रैव दक्षिणत उदङ्मुखस्तिष्ठेत । दाता यथाशक्ति कनकयुत

माज्यपात्रमादाय तत्र गोपुच्छं निक्षिप्य सतिले प्रागग्रे विप्रपाणौ घृतदिग्धं सतिलकुशपुच्छं निक्षिप्य जलधारां पातयेत्। स्वस्त्य०। 'यज्ञसाधन०'। इमां गां सवत्सां रुद्रदैवत्यां सुवर्णशृंगीं रौप्यखुरां ताम्रपृष्ठीं मुक्तामाललांगूलां कांस्यदोहां रक्तवस्त्रावृतां घंटालंकृतकण्ठां गन्धपुष्पमालाशोभिताम्, एतावदसंभवे यथाशक्त्यलंकृतां वा तुभ्यमहं संप्रददे न मम। ब्राह्मणः प्रतिगृह्णामि इत्युक्त्वा स्वस्ति इति वदेत् एवं पुनर्द्विवारं कार्यम्। 'क इदं कस्मा ०'। इति ब्राह्मणः कामस्तुतिं पठेत् कृतस्य गोदानस्य सांगतासिद्ध्यर्थमिमां दक्षिणां तुभ्यमहं संप्रददे न मम। धेनुं कानिचित्पदान्यनुव्रज्य महाभारतोक्तां गोमतीं जपेत्। "गावो मामुपतिष्ठंतु हेमशृंग्यः पयोमुचः। सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा॥१॥ गावः पश्याम्यहं नित्यं गावः पश्यंतु मां सदा। गावोऽस्माकं वयं तासां यतो गावस्ततो वयम्॥२॥" ब्राह्मणाय आमान्नं दत्त्वा। कृतस्य क०। 'ॐ वषट्ते विष्ण०'। 'यस्य स्मृ०' अनेन गोदानेन श्रीपरमेश्वरः प्रीयताम् ॥अथ समुद्रस्नानविधिः॥ "पिप्पलादसमुत्पन्ने कृत्ये लोक

भयंकरे ॥ पाषाणं ते मया दत्तमाहारार्थं प्रकल्प्यताम् ॥''इति मन्त्रेण पाषाणं प्रक्षिप्य ''विश्वाची च घृताची च विश्वयोने विशांपते ॥ सान्निध्यं कुरु मे देव सागरे लवणांभसि॥१॥नमस्ते विश्वगुप्ताय नमो विष्णो अपांपते ॥ नमो जलधिरूपाय नदीनां पतये नमः ॥ २ ॥ समस्तजगदाधार शंखचक्र गदाधर ॥ देहि देव ममानुज्ञां तव तीर्थनिषेवणे॥३॥ त्रितत्त्वात्मकमीशानं नमो विष्णुमुमापतिम् ॥ सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ॥ ४ ॥ अग्निश्च योनिरनिलश्च देहो रेतोधा विष्णुरमृ तस्य नाभिः । एतद्ब्रुवन् पाण्डवसत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥ ५ ॥ '' आचम्य प्राणानायम्य देश० ' ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकपर्वनिमित्तं समुद्रस्नान महं० । स्नात्वाचम्य 'आपोहिष्ठा' इति तिसृभिर्मार्जनं कृत्वा अघमर्षणं कुर्यात् । ब्रह्मादयो ये देवाः तान् देवांस्तर्पयामि । भूर्देवांस्त० । भुवर्देवांस्त० । स्वर्देवांस्त० भूर्भुवः स्वर्देवांस्त० ।नवीती । कृष्णद्वैपायनादयो ये ऋषयः तान् ऋषींस्त० । भूर्ऋषींस्त० भुवर्ऋषीं० । भूर्भुवः

स्वर्क्ष्ं० । प्राचीनावीती । सोमः पितृमान्यमोऽङ्गिरस्वानग्निष्वात्ताः कव्यवाहनादयो ये पितरः तान्पि तृंस्तर्प० । भूःपितृंस्त० । भुवः पि० । स्वः पि० । भूर्भुवःस्व० । " यन्मया दूषितं तोयं शारीर मलसंभवात् । तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् ॥" 'ये के चास्मत्कु०' वस्त्रं परिधाय "सर्वरत्नो भवाञ्छ्रीमान्सर्वरत्नाकरो यतः । सर्वरत्नप्रधानस्त्वं गृहाणार्घ्यं महोदधे ॥" इति मन्त्रेणार्घ्यं दद्यात् ॥ अथ तर्पणम् ॥ पिप्पलादं तर्पयामि १ । विकर्णं० २ । कृतांतं त० ३ । जीविकेश्वरं० ४ । वसिष्ठं० ५ । वामदेवं० ६ । पराशरं० ७ । उमापतिं० ८ । वाल्मीकिं० ९ । नारदं० १० । वालखिल्यांस्त० ११ । नलं० १२ । नीलं० १३ । गवाक्षं० १४ । गवयं० १५ । गन्धमादनं० १६ जाम्बवन्तं० १७ । हनुमन्तं० १८ । सुग्रीवं० १९ । अंगदं०२० । रामं० २१ लक्ष्मणं० २२ । यशस्विनीं सीतां त २३ " आब्रह्म स्तम्बपर्यन्तं यत्किञ्चित्सचराचरम् । मया दत्तेन तोयेन तृप्ति मेवाभिगच्छतु ॥ " इति समुद्रस्नानविधिः ॥ मलमासः ॥ मम त्रयस्त्रिंशद्देवतात्मकविष्णुरूपिसह

स्रांशुश्रीपुरुषोत्तमप्रीत्यर्थं मलमासमहापर्वनिमित्तं ब्राह्मणाय गुडयुतसघृतसहिरण्यकांस्यपात्रनिहित सोपस्करत्रयस्त्रिंशदपूपदानमहं० तदंगतया ब्राह्मणपू० । पूजां कृत्वा, स्वस्त्य० " विष्णु रूपी सहस्रांशुः सर्वपापप्रणाशनः ॥ अपूपान्नप्रदानेन मम पापं व्यपोहतु ॥ १॥ नारायण जगद्बीज भास्करप्रतिरूपक ॥ व्रतेनानेन पुत्रांश्च संपदं चाभिवर्धय ॥ २ ॥ यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम् ॥ शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥३॥ कलाकाष्ठादिरूपेण निमेषघटि कादिना ॥ यो वंचयति भूतानि तस्मै कालात्मने नमः ॥ ४॥ कुरुक्षेत्रमयं देशः कालः पर्व द्विजो हरिः ॥ पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ॥ ५ ॥ मलानां च विशुद्ध्यर्थं पापप्रशमनायच ॥पुत्र पौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर॥ ६ ॥ " इदं गुडयुतं सघृतं सहिरण्यं कांस्यपात्रनिहितं सोपस्करं त्रयस्त्रिंशदपूपान्नममुकशर्मणे ब्राह्मणाय त्रयस्त्रिंशद्देवतात्मकविष्णुरूपिसहस्रांशुश्रीपुरु षोत्तमप्रीतिकामस्तु० प्रतिगृह्यताम् । कृतस्य सोपस्करापूपदानस्य प्रतिष्ठाफलसिद्ध्यर्थमिमां० ।

तेन श्रीपरमेश्वरः प्रीयताम् ॥ चंद्रदानम् ॥ मम जन्मराशेः सकाशात् चतुर्थस्थानास्थितचन्द्रपीडापरिहारद्वारा चन्द्रैकादशस्थानस्थितशुभफलप्राप्त्यर्थं ब्राह्मणाय रजतदानं क०, तदंगत्वेन ब्रा० । स्वस्त्य० ॥ “ प्रीतिर्यतःपितॄणां च विष्णुशंकरयोःसदा । शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे ॥” इदं रजतममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । कृतस्य रजतदानस्य सांगता० । अनेन रजतदानेन श्रीचन्द्रः प्रीयताम् ॥ चन्द्रबिंबदानम् ॥ मम जन्मराशेः सकाशादमुकस्थानस्थितचन्द्रग्रहसूचितसर्वारिष्टप्रशांतिपूर्वकैकादशस्थानास्थितग्रहसूचितशुभफलावाप्तये चंद्रबिंबदानं क०, तदंगतया ब्राह्मणपू० ब्राह्मणं संपूज्य । चन्द्रं राहुं च मनसा ध्यात्वा, स्वस्त्य० । तमोमय महाभीम सोमसूर्यविमर्दन ॥ हेमताराप्रदानेन मम शांतिप्रदो भव ॥ १॥ विधुंतुद नमस्तुभ्यं सिंहिकानंदनाच्युत ॥ दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ॥ २॥ इदं सौवर्णं राहुबिंबं नागं रजतचन्द्रबिंबं घृतपूर्णकांस्यपात्रनिहितं यथाशक्ति तिलवस्त्रदक्षिणासहितं ग्रहणसूचितारिष्टनिरासार्थं

शुभफलावाप्त्यर्थं च अमुकशर्मणे ब्राह्मणाय तुभ्य०। प्रतिगृह्यतां न मम। कृतस्य बिंबदानस्य सांग
ता० । तेन श्रीपरमेश्वरः प्रीयताम् ॥ ग्रहणे तिलपात्रदानम् ॥ पृथ्वीदानसमफलावाप्तिद्वारा श्रीपरमे
श्वरप्रीत्यर्थं चन्द्रोपरागमहापर्वनिमित्तं ब्राह्मणाय तिलपात्रदानमहं०, तदंगं ब्रा०। स्वस्त्य० । "महर्षे
गोत्रसंभूताः काश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥" इदं तिलपात्रं
यमदैवतममुकशर्मणे ब्राह्मणाय कृतस० प्रति० न मम । दानसांगता० । तेन श्रीपरमेश्वरः प्री० ॥
वस्त्रदानम् ॥ पृथ्वीदानसमफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चन्द्रोपरागमहापर्वनिमित्तं ब्राह्मणाय
वस्त्रदानमहं०' तदंगं ब्रा० । 'शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः
शांतिं प्रयच्छ मे ॥" इदं वस्त्रं बार्हस्पत्यममुकशर्मणे ब्राह्मणाय कृतसंकल्पसिद्धिकामस्तु० । दान
सांगता० । तेन श्रीपरमेश्वरः० ॥ सुवर्णदानम् ॥ पृथ्वीदानसमफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं
चन्द्रोपरागमहापर्वनिमित्तं ब्राह्मणाय सुवर्णदानमहं०, तदंगत्वेन ब्रा० । स्वस्त्य । 'हिरण्यगर्भ

गर्भं०, दद्यात् अनेन सुवर्णदानेन श्रीपरमेश्वरः०॥ अथ सूर्यग्रहणे बिंबदानम् ॥ मम जन्मराशिस्थितसूर्यग्रहसूचितसर्वानिष्टप्रशांतिपूर्वकैकादशस्थानस्थितग्रहसूचितफलावाप्तये बिंबदानं क०, तदंगब्रा० । ब्राह्मणपूजां विधाय सूर्यं राहुं च मनसा ध्यात्वा, स्वस्त्य० । "तमोमय महाभीम सोमसूर्यविमर्दन । हेमताराप्रदानेन मम शांतिप्रदो भव ॥१॥ विधुंतुद नमस्तुभ्यं सिंहिकानंदनाच्युत ॥ दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ॥२॥" इदं सौवर्णं राहुबिंबं नागं सौवर्णं सूर्यबिंबं घृतपूर्णं कांस्यपात्रनिहितं यथाशक्तितिलवस्त्रदक्षिणासहितं ग्रहणसूचितारिष्टविनाशनार्थं सुफलप्राप्त्यर्थं च अमुकशर्मणे ब्रा०प्रति०, न मम । कृतस्य बिंबदानस्य सांगता०।तेन श्रीसूर्यः प्रीयताम् ॥ तिलपात्रदानम् ॥ पृथ्वीदानसमफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्योपरागमहापर्वनिमित्तं ब्राह्मणाय तिलपात्रदानमहं० तदंगब्रा० । स्वस्त्य० ।'महर्षेर्गोत्र०'। इदं तिलपात्रं यमदैवतममुक० । दानसांगता० । तेन श्रीपरमेश्वर०॥ सुवर्णदानम् ॥ पृथ्वीदानसम० निमित्तं ब्राह्मणाय सुवर्णदानमहं०

तदंगत्रा० । स्वस्त्य ॥ "हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनंतपुण्यफलदमतःशांतिं प्रयच्छ मे ।" इदं सुवर्णमग्निदैवतममुक० । अनेन सुवर्णदानेन श्रीपरमेश्वरः प्री० ॥ वस्त्रदानम् ॥ पृथ्वीदान० वस्त्रदानमहं०, तदंगत्रा० । स्वस्त्य० । शरण्यं सर्व० । इदं वस्त्रं बार्हस्पत्यममुक० । दानसांग० तेन श्रीप० ॥ तिथिदोहददानम् ॥ देश०, अद्य कर्तव्ययात्राकाले विरुद्धायाः चतुर्दशीतिथेः शुभता सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणाय तिथिदोहदतण्डुलदानं क०, तदंगत्वेन ब्रा० । स्वस्त्य० । "तण्डुला वैश्वदेवत्याः पाकेनान्नं भवन्ति ये । पावनः सर्वयज्ञेषु प्रशस्ता होमकर्मणि ॥ तस्मात्तण्डुलदानेन प्रीयंतां विश्वदेवताः ॥" इमान् तण्डुलानमुकशर्मणे ब्राह्मणाय कृतसं० । सांगता० तेन श्रीपरमेश्वरः० ॥ प्रमादादन्तरितदर्शपौर्णमासस्थालीपाकसंकल्पः ॥ देश०, प्रमादादन्तरित दर्शपौर्णमासस्थालीपाकलोपजन्यप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमर्धकृच्छ्रप्रायश्चित्तं तत्प्रत्याम्नायभूतं यथाशक्ति द्रव्यदानं स्थालीपाकसंपत्तिपर्याप्ततण्डुलाज्यद्रव्यदानं च करिष्ये

इदमर्धकृच्छ्रप्रत्याम्नायभूतं द्रव्यं स्थालीपाकद्रव्यं च ब्राह्मणाय दातुमहमुत्सृजे न मम ॥ संकष्ट चतुर्थीव्रतोद्यापनसंकल्पः ॥ मत्पत्न्या आयुष्मत्सुपुत्रावाप्तिकामनयाचरितस्य संकष्टचतुर्थीव्रतस्य परिपूर्णतायै उत्तरांगं तदुद्यापनाख्यं कर्म करिष्ये । तदंगत्वेन स्वस्तिपुण्याहवाचनं मातृका पूजनं नांदीश्राद्धमाचार्यादिवरणं च क० तदादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपू० ॥ अष्ट फली ॥ मम समस्तपापक्षयपूर्वकसकलसौभाग्यपुत्रपौत्राद्यभिवृद्धिद्वारा उमामहेश्वरप्रीत्यर्थ मष्टब्राह्मणेभ्यः सदेवेभ्य अष्टाष्टसंख्याम्रफलदानानि क०, तदंगत्वेन उमामहेश्वरपूजनं ब्राह्मण पूजनं च क० । उमामहेश्वरसहितान्ब्राह्मणान्संपूज्य० । स्वस्त्य० । "फलं मनोरथफलं प्रददाति सदा नृणाम् । पुत्रपौत्रादिवृद्धिं च तस्माच्छांतिं प्रयच्छ मे ॥" इमानि अष्टाष्टसंख्याकानि आम्र फलानि नानानामगोत्रेभ्यः अष्टब्राह्मणेभ्यः सदेवेभ्यः गोधूमतांबूलदक्षिणायुतानि वनस्पतिदैवतानि समस्तपापक्षयपूर्वकसकलसौभाग्यपुत्रपौत्राद्यभिवृद्धिकामा युष्मभ्यमहं संप्र० । सांगता० गां

युष्मभ्यमहं सं० । अनेनाष्टफलीदानेन उमामहेश्वरौ प्रीयेताम् ॥ सोलवंडी ॥ मम समस्तपापक्षय
पूर्वकसकलसौभाग्यपुत्रपौत्रादीप्सितानन्तफलावाप्तये दीयमानफलसमसंख्यवर्षसहस्रावच्छिन्ना
नेकस्वर्गसुखावाप्तिद्वारा उमामहेश्वरप्रीत्यर्थं षोडशब्राह्मणेभ्यः सदेवेभ्य षोडशषोडशसंख्याकाम्र
फलदानानि क०, तदंगत्वेन उमामहेश्वरपूजनं ब्रा० । उमामहेश्वरसहितान्ब्राह्मणान्सं
पूज्य स्वस्त्य० । " फलानि षोडशेमानि स्वर्णधान्यादिभिः सह । द्विजवर्यांश्च गृह्णंतु मम
सन्तु मनोरथाः ॥ इमानि षोडशसंख्याकानि आम्रफलानि एकैकस्मै सगोधूमतांबूलफलदक्षि
णायुतानि वनस्पतिदैवतानि नानानामगोत्रेभ्यः षोडशब्राह्मणेभ्यः सदेवेभ्यः समस्तपापक्षय
पूर्वकसकलसौभाग्यपुत्रपौत्रादीप्सितानन्तफलावाप्ति दीयमानफलसमसंख्यवर्षसहस्रावच्छिन्नानेकस्वर्ग
सुखावाप्तिकामा युष्मभ्यमहं संप्र० । सांगता० णां युष्मभ्यमहं सं० अनेन षोडशफल
दानेन उमामहेश्वरौ प्री० । अष्टफलीपृथक्पक्षेऽयमेव संकल्पः । मम समस्तपापक्षयपूर्वकसकल

सौभाग्यपुत्रपौत्राद्याभिवृद्धिद्वारा उमामहेश्वरप्रीत्यर्थमष्टब्राह्मणेभ्यः सदेवेभ्योऽष्टाष्टसंख्याकाञ्
फलदानानि क०, तदंगत्वेनोमामहेश्वरपूजनं, ब्रा० इति संकल्प्य उमामहेश्वराय० इदमासनम् ।
उमा० इदं पाद्यम् । उमा० इदमर्घ्यम् । उमा० इदमाचमनीयम् । गन्धाः पांतु । अक्षताः पांतु ।
पुष्पाणि पांतु । तांबूलानि पांतु । 'नमोऽस्त्वनंताय० धारिणे नमः' । स्वस्त्य० ।"फलं मनोरथ
फलं प्रददाति सदा नृणाम् । पुत्रपौत्रादिवृद्धिं च तस्माच्छांतिं प्रयच्छ मे॥" इमान्यष्टसंख्याकान्याञ
फलानि गोधूमतांबूलदक्षिणायुतानि वनस्पतिदैवतानि उमामहेश्वराय समस्तपापक्षयपूर्वकसकल
सौभाग्यपुत्रपौत्राद्याभिवृद्धिकामा तुभ्यम० । सांगता० । इति देवपुरतो दक्षिणामर्पयेत् । ततः
ब्रह्मणे इदमासनं० । स्वस्त्य० । 'फलं मनोरथ०' । इमान्यष्टसंख्या० दैवतानि अमुकशर्मणे ब्राह्म
णाय समस्तपाप० । सांगता० । एवं सप्तब्राह्मणेभ्यो दत्त्वा अनेनाष्टफलीदानेन उमामहेश्वरौ० ।
षोडशफलीपृथक्पक्षे । मम समस्त० करिष्ये, तदंगत्वेनोमा० । उमामहेश्वराय० इदमासनम् ।
स्वस्त्य० ।"फलानि षोडशेमानि स्वर्णधान्यादिभिः सह । देववर्य गृहाण त्वं मम संतु मनोरथाः॥"

इमानि षोडशसंख्याकान्याम्रफलानि गोधूमतांबूलफलदक्षिणायुतानि वनस्पतिदैवतानि उमामहेश्वराय समस्तपापक्षयपूर्वकसकलसौभाग्यपुत्रपौत्रादीप्सितानन्तफलावाप्ति दीपमानफलसमसंख्यवर्षसहस्रावच्छिन्नानेकस्वर्गसुखावाप्तिकामा तुभ्यमहं० । सांगता० । इति देवपुरतो दक्षिणामर्पयेत् । ततः—ब्राह्मणे इदमासनम् । स्वस्त्य० । "फलानि षोडशेमानि स्वर्णधान्यादिभिः सह । द्विजवर्य गृहाण त्वं मम संतु मनोरथाः ॥" इमानि षोडशसं० दैवतानि अमुकशर्मणे ब्राह्मणाय समस्तपापक्षय० । सांगता० । एवं पंचदशब्राह्मणेभ्यो दत्त्वा, अनेन षोडशफलदानेन उमाम० ॥ उदकशांतिः ॥ मम शरीरे उत्पन्नोत्पत्स्यमानकफवातपित्तक्षुद्रदेवताग्रहभूतादिनानाकारणोद्भूतसंततज्वरादिसमस्तामयानां जीवच्छरीराविरोधेन समूलनिवृत्तिपूर्वकाक्षिप्रारोग्यवाप्त्यर्थं श्रीषडंगसहितवेदपुरुषप्रीत्यर्थं ब्राह्मणद्वारा बौधायनोक्तामुदकशांतिं करिष्ये तदंगगणपतिपूजनं पंचशब्दैः पुण्याहवाचनं ब्राह्मणवरणं च करिष्ये ॥ सौभाग्यवायनम् ॥ देश०, ममेह जन्मनि जन्मांतरेष्वखण्डसौभाग्यावाप्तिपूर्वकपुत्रपौत्राद्यभिवृद्धिद्वारा उमामहेश्वरप्रीत्यर्थमष्टब्राह्मणेभ्यः सदेवेभ्यः सोप

स्कारैकैकसौभाग्यवायनदानानि कु०, तदंगत्वेनोमामहेश्वरपूजनं, ब्रा० । स्वस्त्य० "कंचुकीं
वस्त्रसहितं तथा कर्णावतंसकैः । कंठसूत्रैश्च भूषाभिः प्रीयतां नगनंदिनी ॥" इमानि सौभाग्यवाय
नानि नानानामगोत्रेभ्योऽष्टब्राह्मणेभ्यः सदेवेभ्यः संकल्पितकामनासिद्धिकामा युष्मभ्यमहं संप्र०
सांगता० । तेन उमामहेश्वरौ प्री० ॥ इति श्रीरसतर्वगभूपरिमित १७६६ शालिवाहनशाके पल्लीदुर्ग
स्थज्योतिर्वित्कुलोत्पन्नसकलविद्वद्ब्राह्मणचरणधूलिकोपममयूरेश्वरसूनुना रामचन्द्रेण कृता संकल्प
कल्पना समाप्ता ॥ श्रीवेंकटेशार्पणमस्तु ॥ शुभमस्तु ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गङ्गाविष्णुना स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् । संवत् १९८१, शके १८४६.

पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस,
खेतवाडी-मुंबई.

